हिन्दुस्थान प्रति मम प्रयागमनोत्तरमेव मयावगत यद्ब्रह्मचर्यं मानुषप्रयत्नादेव केवलमसाध्यमिति । तदवधि फलाहारेण विकारजातस्य समूलनाशो भविष्यति । नान्यत्किमपि कर्तुमावश्यकमिति स्वाभिमानाद्विश्वस्य तद्विश्वासमायाया लग्नोऽभवम् ॥

एतद्वृत्तान्तनिरूपकप्रकरणमग्रे वर्तते। अद्य पुनरेतावन्मात्र स्पष्टीकर्तव्य य मोक्षसाधनाय ब्रह्मचर्यं रिरक्षिषुभि स्वप्रयत्ने यावान् विश्वासो निधीयते तावान्भगवत्यपि निवेश्यते यदि प्रेप्सितभगो नैव शङ्कनीय । तथाहि भगवदुक्ति —

विषया विनिवर्तन्ते निराहारस्य देहिन ।

रसवर्जं रसोऽप्यस्य पर दृष्ट्वा निवर्तते ॥ भ गी २,५९

अत एव मुमुक्षो श्रीरामनामैव श्रीरामकृपैव परमाश्रय । भरतखण्ड प्रत्यागतस्यैव ममेद तत्त्व बुद्धिगोचरोऽभवत् ॥

नवमोऽध्याय

# सरलजीवनम्

मया तावदारब्धो भोगप्रधानो जीवनक्रम । परतु चिराय सैष नहि प्राचलत् । मन्दिर महतायधानेन मया सज्जीकृतमासीत् । किन्त्वेतन्मदीयमानस न ह्याकर्षत् । अथाह गृहव्यय मल्पयितु प्रवृत्त । रजकाय प्रदेया भृतिरर्धिता स्म । स तावद्वसनानि कालेनोपाहरत् । तस्माद्विंशत्या त्रिंशता वा कञ्चुकेषु गलपट्टकेषु स्थितेष्वपि न पर्याप्नुवन् । गलपट्टिका प्रतिदिन आतरच्युता एकाहव्यवधानेन वा परिवर्तनीया ह्यासन् । एतेन मे द्विगुणो व्यय सवर्तते स्म । मन्मतेन समञ्जसमित्यहमचिन्तयम् । तद् व्यय रिरक्षु स्वयमेव वस्त्रक्षालनमारभे। क्षालनविधान बुतधि पुस्तकमादवगुच्य भार्यामप्यशिक्षयम् । एतेन यद्यपि कार्यस्य बाहुल्यमुपजात तथापि तस्य नूतनोपक्रमाद्वावयोरेतद्विनोदकरमेवासीत् ॥

गलपट्टिकाया स्वय निर्णेजनव्यतिकर वदाम्यविस्मरणीयो भवति । मया तत्र सायाचिरकालिकेन योजितमभवत । घट्टन ( पारधरण ) यन्त्र प्रमाणमनापित नासीत । दहनशङ्कया गलपट्टिका सम्यग्घट्टिता नाभूत । एतेन दृढतमापि पट्टिका सर्वदा खाजिकपिष्ट मुच्यते स्म । ईदृशीमेव प्रतिमुच्य न्यायसभा गत सहस्थिताना न्यायिकदलजनानामुपहास्यतामगमम् । तथापि पर्यन्ते घट्टनकलाविशारदोऽभवम् ॥

अहमवोचम्—स्वयं गलपट्टिकाक्षालनस्यायमेव मे प्रथमोऽवसरः । अत एव काचिद्विक्यात् पिष्टमूर्धन्ये किन्त्वनेन मम क्लेशः कोऽपि नास्ति। परं भवतां विनोदप्राप्तिरप्येको लाभ इति ॥

ततः सुहृदपृच्छत्—किमत्र रजका दुर्लभा इति ॥

अहमवोचम्—

इह निर्णेजकाय प्रदेयं द्रव्यं ह्यधिकं मे प्रतिभाति । यावत् पट्टिकामूल्यं तावन्निर्णेजकव्ययो भविष्यति । किन्तु रजकस्याश्रयणं पदे पदे प्रसज्यते । तन्मन्ये स्वहस्तेन स्वेनैव क्षालनं वरमिति ॥

एतत्स्वावलम्बनस्वारस्यं मदीयमित्राणि ग्राहयितुं नाशकम् । अथ क्रमेण कृतहस्तस्य रजकस्येव स्वकर्मणि नैपुण्यमहमध्यगच्छम् । रजकानुष्ठितकार्यापेक्षया मदीयकार्यं न पर्यहीयत । दृढत्वे भास्वरत्वे च मदीयगलपट्टिका निर्णेजकधौतपट्टिकाभ्यः कथमपि नावरा अभूवन् ॥

दक्षिणाफ्रिकादेशमागतस्य गोखलेमहाशयस्य निकटे महादेव गोविंद-रानडे-महोदय प्रदत्तमेकमुत्तरीयं स्थितम् । तदेतद् दातुः प्रज्ञापकं गोखलेमहाशयो यत्नेन नाम्यरक्षत् । अपूर्वसदर्भेष्वेव च तदुपायुङ्क्त । जोहानिसबर्गनिमित्तमार्तीयस्तत्सम्माननार्थमवकल्पितं भोजनं स्तर्पणमप्येको निदिशावसर आसीत् । तदानीमेतदुत्तरीयं नवीकरणायमापतितम् । पुटितपुटितरेखितत्वात्तन्निर्णिज्य तत्प्रवहेन परिष्करणीयमासीत् । रजकमासाद्य निर्णेजयितुमवकाशो नाविद्यत । स्वकौशल्यमुपयुञ्जानस्तत्कार्यमहं करिष्यामीत्यवोचम् । तदा गोखलेमहाशयोऽकथयत । यथा—

"न्यायवादित्वस्य भवद्विः सम्यगनुमीयते इत्यस्ति मे विश्वासः । किन्तु वो निर्णेजनपाण्डित्ये नाहं श्रद्धालुः । दूषितेऽमुष्मिन् का गतिः । उत्तरीयमिदं मया नियन्मूल्यवद्गण्यत इति ज्ञायते वेति ॥"

एवमाख्याय बहुमानत्वेन यथा बहुमानत्वेन तल्लाभं समुपालनत्तथा परमोत्साहेन महामुपावर्णयत् । तथाप्यहं यथावत्कार्यं करिष्यामीति सविनयं प्रतिज्ञाय तापनेन वस्त्रं परिष्कर्तुमनुज्ञामापम् । कृतकार्यश्च श्लाघावचनस्यमन्दिषि । इदानीमप्येवं जातेव यद्यपि मदीयकौशलं नाङ्गीकुर्यात्तदा मे का वा क्षतिः ॥

यथाहं रजकाश्रयात्तथा नापिताश्रवनादप्यामानं व्यमोचयम् । आअंग्लदेशं गन्तुमुद्यता सर्वेऽपि स्वयं क्षौरविधानं शिक्षन्ते । तथापि स्वयं लोमकुन्तनस्य शिक्षिता जनो नाद्यापि मया दृष्टः । मया तदपि शिक्षणीयमासीत् । अहमेकदा प्रिटोरियानगरे कस्यचिदाङ्ग्लनापितस्य कार्यालयमागच्छम् । मम केशकुन्तनं न करिष्यामीति सोऽब्रवीत् । एवं प्रतिनुशासनेन प्रदर्शिता त्वनज्ञा वर्णयितुमशक्या भवति । अहं परमखिन्नः । तत्क्षणमेव विपणिं गत्वा केशकुन्तनयन्त्र

की या दर्पणस्याग्रे स्थित । स्वशिरोग्रभागस्य केशानलुञ्चि । किन्तु चरमभागस्य केशलुञ्चनं दुष्करमासीत् । तदेतन्नैव सुनिष्पन्नम् । न्यायसभाया सुहृदो मामवलोक्य परिहासमग्ना अभवन् । ननु गाधिमहाशय किं वृत्त भवत केशानाम् । तान्प्रत्यहं किमब्रुवन् ॥

नहि गौरनापित कृष्णशीर्षं मदीय कथ वा स्प्रष्टुमर्हेत् । अतोऽहमसमीचीनतामनादृत्य स्वयमेव तानलुञ्चिषम् । प्रत्युक्तिरेषा न मे सुहृदामाश्चर्यमजनयत् । केशान्न लुञ्चिष्यामीति वदता नापितेन किमपि नापराद्धम् । कृष्णाङ्गाना केशलुञ्चने तस्य वृत्तिरेव विनाशमुपेयात् । न खलु वयमस्मदीयश्वैरकैः पच्यमानामुपसर्पणमनुजानीमहे । ईदृग्भावनाया फल न तावत्कृतेव परमनेकशोऽनुभावि । अस्मदीयपापानामिदं प्रायश्चित्तमिति मन्वानो विषयेऽस्मिन्न तदानीं क्रोधमाकलयम् ॥

सरलतास्वावलम्बनयोर्ममादर शनैः शनैस्तीव्ररूपमापद्यतेति यथावसर वर्णयिष्यते । किन्तु पूर्वमेवास्य बीजमवापि । तच्च रूढमूल पुष्पितु फलितु च जलसेचनमात्रमपैक्षत जलसेचन च काले प्राप्तमेव ॥

दशमोऽध्यायः

# बोअर-युद्धम्

आसप्तनवत्यधिकाष्टशतोत्तरसहस्रतमादानवनवत्यधिकाष्टशतोत्तरसहस्रतमं वत्सर मदनुभवगोचरीभूतान् बहून्विषयान् विसृज्य साम्प्रत बोअरयुद्धस्य वृत्तान्त उपवर्णनीयो भवति । एतद्युद्धारम्भस्य प्रारम्भकाले श्रीअरजनैरेव सर्वात्मना सहानुभूतिरस्माकमासीत् । किन्तु स्वामिप्रायानुसारेण वर्तितुमवाप्तोऽहमिति ममासीत्तदानीं मनीषा । इद दक्षिणाफ्रिकासत्याग्रहेतिहासेऽनुञ्झितहृदयमूक्ष्मपरामर्शेन मया सम्यगुपावर्णि । तस्मादस्य पुनर्निरूपणमत्र निरवकाश भवति । एतद्वृत्तान्त बुभुत्सुभि स एवेतिहासो द्रष्टव्य इति बोधयामि । इह तावदियन्मात्रमिदानीं वक्तव्य यथा — आङ्ग्लसाम्राज्य प्रति ममासीद्यादृशी स्वामिभक्ति सा तस्मिन्नायोधने ममाङ्ग्लपक्षमाश्रित्य प्रवर्तनाय बलात्प्रैरयत् । आङ्ग्लराज्यप्रजाधिकारोऽस्य मया सपिपादयिषितस्तदाङ्ग्लप्रजावदेव ममापि तद्राज्यरक्षणे प्रवृत्त्याश्रयण धर्म्यमित्यहमचिन्तयम् । तत्कालमहं हिन्दुस्थानस्य पूर्णस्वातन्त्र्यासाति 'ब्रिटिश' चक्राधिपत्य एव स्थित्वा तच्चक्राधिपत्यद्वारेव साध्येत्यभिप्रायवानासम् । अत एव यथाशक्य मित्राणि सङ्गृह्य लब्धक्षतानां योधाना शुश्रूषणाय सेवादलमेकं पर्यकल्पयम् । एतद्दलस्य सेवा राज्याधिकारिण स्वीकारयितु महान् प्रयास आस्थेयोऽभवत् । तदा किल तत्रत्या आङ्ग्लेया प्रायेण भारतीयान्सर्वानपि कातरान् स्वार्थैकपरायणांश्चामन्यन्त । अत एव

बहवो माङ्ग्लेयसुहृदः प्रयत्न मदीयमनभिनन्दन्तो मा निरुत्साहाञ्चक्रुः । डॉ. बूथमहाशयस्तावदेक एव सर्वात्मना मामपोषयत् । परिक्षतयोधाना शुश्रूषणस्य विधानमस्मानशिक्षयत् । एतत्कार्यनिर्वाहोचितशरीरदार्ढ्यमपन्ना वयमिति भिषक् सकाशाद्योग्यतापत्रिका वयं समपादयाम । एस्कम्बमहाशयो लॅटनमहाशयश्च प्रयत्नमेनं सोत्साहमन्वमोदेताम् । अथान्ते वयं युद्धे सेवां करिष्याम इति राज्याधिकारं प्रति विज्ञप्तिमकुर्महि । राज्याधिकृताश्च तद्विज्ञप्तिहेतोः स्वकृतज्ञतां प्रत्याख्यायाधुनैव सेवया न कार्यमित्यस्मानवेदयन् ॥

किन्तु तदनङ्गीकारवाक्येन नाहं परितुष्य जोषमवास्थिषि । डॉ. बूथमहाशयस्य साहाय्यमुपलभ्य नातालदेशवर्तिनं क्रैस्तमताचार्यमदर्शम् । आस्माकसेवादले बहवो भारतीया क्रिस्तमतावलम्बिनोऽभवन्त । ममोपदेशमाकर्ण्य मताचार्यः परं समतुष्यत् । राज्याधिकारेणास्मदीया सेवा यथा स्वीक्रियेत तथाहमुपकरिष्यामीति च प्रत्यजानीत ॥

एतन्मध्ये कालस्याप्यनुकूलभयोगोऽस्माभिर्लब्धः । बोअरयोधा अविनिर्वर्तितं धैर्यं स्थैर्यं विक्रमं च प्रादर्शयन् । अथ राज्याधिकारोऽस्मदीयसेवाया आवश्यकतामपश्यत ॥

आस्माकसेनादलमेकशतोत्तरसहस्रजनसंख्याकमासीत् । तत्र नेतार उपचत्वारिंशज्जना । त्रिशतं स्वतन्त्रभारतीया शेषा प्रतिज्ञाबद्धकर्मकराः । डॉ. बूथमहाशयोऽपि सहास्माभिरेव स्थितः । सेनादलं स्वकार्यं श्लाघ्यतया निरवाहयत् । यद्यप्यस्मदीयकार्यं शतघ्नीप्रहारसान्तिविदूरे प्रदेशे निर्वर्तनीयमासीत् । यद्यपि वयं ' रक्तस्वस्तिक ' ( रेड क्रॉस ) बन्धेन समरक्षिष्महि तथापि प्रतिबद्धमपि मार्गे समयेऽस्माभिराग्नेयगुलिकापातस्थल एव सेवाकृत्यमनुष्ठेयमित्यादिक्ष्महि । गुलिकापातस्थलप्रवेशनिषेधको यो नियमः सोऽस्मदिच्छया न प्रयुक्तः किन्तु राज्याधिकार-निदेश एव तादृशोऽभूत् । तथापि स्पियाकोपे पराजयप्राप्त्यनन्तरं परिस्थितिरन्यथा समपनि । तथाहि सेनापतिर्बुल्लरमिमानं संदेशं व्यसर्जयत्—यद्यपि यूयं विपद्गोचरे स्थातुमनर्हा तथापि समराङ्गणं प्रविश्य परिक्षतयोधानानयथ चेत्तदा राज्याधिकारस्य महती युष्माभिरुपकृतिर्विहिता स्यादिति । विपद्गोचरीभवितुं वयं सज्जा एव स्थिताः । तस्मात् स्पियाकोपयुद्धे शतघ्नीप्रहारान्तःपातिषु प्रदेशेषु गत्वा कार्यं कर्तुमारभामहि । एषु दिवसेषु परिक्षतान्योधान् शीवकैर्वहन्तो वयं विंशत्या पञ्चविंशत्या वा पाषाणैर्दवीयसः प्रदेशानन्वगच्छामहि । इत्थमस्माभिरपोढाना योधाना मध्ये जनरल्वुड्गेटप्रभृतयो जना अभिचन्त ॥

सप्ताहपट्कं यावत्कृताया सेवायामस्मदीयदलो व्यसर्जि । स्पियाकोपकालञ्जसस्थल्यो-र्लब्धपराजया प्रधाना आङ्ग्लसेनापतयो बोअरजनास्कन्दात् लेडीस्मिथप्रभृतिस्थलाना सद्यो

विमोचनप्रयत्न विहाय हिन्दुस्थानादाङ्ग्लदेशाच सैन्यागम प्रतीक्षमाणैरस्माभि समुद्योगो विलम्ब-नीय इति निश्चिक्यु ॥

इमामल्पामपि सेवा तस्मिन्नवसरे बहु प्राशसिषु । भारतीयेषु माननावृद्धिमापत् । 'सर्वेषामपि न समा हि मतिता साम्राज्यसपुत्रता' इति पद्धतीयुतानि प्रशासनपत्राणि सर्वत्र प्राचकाशन् ॥

बुलरमहाशय सेनापतिलेखनद्वारास्मदीयदलस्य सेवाकार्यमस्तावीत् । दलनायकेभ्य समरविरुदमुद्रा अपि प्रादायिषत् ॥

भारतीय समवाय परतु सघटित समवर्तन । प्रतिज्ञानद्धकर्मकरान् भारतीयानह सम्यक्तरा पर्यचैषम् । तेषामतिशयिता जागर्तिरुदपद्यत् । हिन्दुमुसल्मानक्रैस्तमद्रासीगुजराती-सिन्धीजना सर्वेऽपि भारतीया एव सर्वे च मातृभूमेर्भारतवर्षस्य पुत्रा इति भावना बलवत् दृढ-मूलाभवत् । भारतीयाना क्लेशा सर्वेऽपि सर्वथा दूरीभविष्यन्तीति सर्वोऽप्यमन्यत। गौराङ्गाना वर्तनमपि परिवृत्तिमागतमिव स्पष्टमलक्ष्यत । युद्धकाले गौराङ्गै सह घटित सबन्धोऽपि मधुर एवासीत् । पर सहसैराङ्ग्लयोधै सह सङ्गो न समजनि । तेऽस्मासु केवल मित्रभावेनाव-र्तन्तापि तु तत्सेवार्थमागता वयमित्यस्मदीयामुपकृतिं सस्मरन्ति स्म ॥

निसर्गतु मानुषी प्रकृति यथा परमोत्कर्षमाविष्करोतीति निदर्शनार्थमेका मधुरसस्मृति-रिहावश्यमुपन्यसितव्या भवति । चीवलीसञ्ज्ञक सेनानिवेशस्थानमस्माभिर्गम्यते स्म तत्रैव लॉर्डरॉबर्ट्समहाशयस्य कुमारो 'लेफ्टनन्ट रोबर्ट्स' नामा मृत्युसन्निभेनाग्नेयगुलिकाप्रहारेण पञ्चतामगात् । प्रेतकार्यनिर्वहणसमानोऽस्मानुपनत । अस्मदीयप्रयाणदिवसे नैदाघमौज्ज्वल्य समधिकमासीत् । वय सर्वेऽपि तृष्णार्दिता अभूम । मार्गे क्षुल्लका स्रोतस्विनी काचिदलक्ष्यत । जलपानेन पिपासोपशमन सुकरमासीत् । किन्तु प्रथम केन पातव्यम् । आङ्ग्लयोधेषु पीत तृप्तेषु वय च पास्याम इत्यस्माभि सूचितम् । परतु ते प्रथम पातुमप्रतिपद्यमाना पूर्वमस्मानेव पानाय न्यरुन्धन् । कञ्चित्कालमित्थ पौर्वापर्यजिज्ञासा प्रावर्तत ॥

एकादशोऽध्याय:

# नैर्मल्यसुधारणं क्षामनिवारणं च

**समाजाङ्गस्यानुपयुक्तस्थितिनिरूपणं** सर्वदा मे दुस्सह भवति । जनतादोषनिगूहन वा तद्दोषापनयनमन्तराधिकारप्राप्तये सघर्षण वा नाह मोचयामि । अत एवाह नातालदेशे स्थितिमहणादारभ्य दक्षिणाफ्रिकानिवासिषु भारतीयेष्वारोपित दोषं (एतद्दारोपणमीर्ष्यया-

शोपेतमासीत्) अपास्तैर्मुक्तोऽभवम्। एतद्धि प्रवाद श्रूयते स्म। यथा—" भारतीया अलसाः। ते स्वकीयगृहद्वाराणि निर्मलानि न हि स्थापयन्ति। श्वपचा एते" इति॥

एतत्कलङ्कनिर्मूलनोद्देश्येनास्मदीयजनप्रमुखानां गृहेषु पूर्वमेव सुधारणमारब्धमासीत्। किन्तु डरबननगरे ग्रन्थिज्वरप्रसरेणाशङ्का यदा समुदभूत्तदा प्रतिगृहं परीक्षितुमुपाक्रमामहि। पौरसभासदस्यैः सह मन्त्रयित्वा प्राप्तानुमतिभिरस्माभिः कार्यमारब्धम्। ते त्वस्माकं सहकारमपैक्षन्त। अधिगतास्मदीयसहायानां तेषां कार्यं सुकरमभवत्। अस्माकं (भारतीयानां) क्लेशास्तावन्न्यूनतामापद्यन्त। यतो ग्रन्थिज्वराद्युपद्रवेषु समुत्थितेष्वधिकारिणः प्रायेणास्तमितक्षमागुणाः सुदुर्धर्ष-न्यासाद्यवलम्ब्य निजरोषपात्रीभूतान् जनान् दण्डयन्ति। अस्मदीयास्तु स्वयं परिकल्प्य नैर्मल्यकार्यं निर्वाह्य संकटादात्मानमरक्षन्॥

मदीयानुभवेषु सर्वं न मधुरमासीत्। तत्रत्यराज्याधिकारात्स्वाधिकारप्रार्थनाय भारतीयानां साहाय्यमवाप्तुं सुकरमासीत्। तथापि स्वकर्तव्यस्य स्वयं विधानप्रसङ्गे तत्साहाय्यं दुर्लभमलक्ष्यत। ते मां क्वचिदपमानयन्। क्वचित्सविनयमौदास्यमदर्शयन्। स्वसमीपस्थलस्य निर्मलीकरणक्लेश एव तेषां दुस्सहोऽभूत्। तत्कथं नाम कथा प्रसक्तकार्यस्य कृते द्रव्योत्सर्जनस्य। जनैः किमपि कार्यं कारयितुकामेन निरवधिक्षमासम्पन्नेन भवितव्यमित्युपदेशो मदनुभवैरेतैः सम्यङ्मया शिक्षितोऽभूत्। सुधारणसिद्धिसमुत्सुको जनः सुधारक एक एव। तेन च समाजदुष्प्रापमानप्राणान्तिकहिंसा फलत्वेन प्रतीक्षणीया। न पुनरन्या कापि प्रत्याशा मनसि निधेया। सुधारको यद्यपि सुधारणं प्राणवत्प्रियं मन्यते तथापि समाजेन व्यतिक्रमोऽयमिति कुतो न मन्तव्यम्॥

अथाप्येतत्प्रयत्नस्यापायः परितोऽयं न कथ्यते। तत्रत्या भारतीयाः स्वगृहद्वारादिकस्य स्वच्छतयावस्थापनमावश्यकमित्यज्ञासिषुः। अधिकारिणो मयि गौरवमुपाचीयन्त। ते किञ्चिदवगम्य जानन् यदहं बहिरस्मदीयन्यूनातिरिक्तानि प्रकाश्य स्वाधिकारस्य कृते यतमानो युध्यमानः स्थैर्यमवलम्ब्य स्थितवानस्तस्मात् सुधारणस्य कृतेऽपि स्थैर्यो माहसपन्नोऽभूवमिति॥

किन्तु कार्यमन्यदप्याशिष्यत। तच्च तत्रस्थानिनां भारतीयानां निजमातृभूमिं प्रति स्वकर्तव्योपदेशः। भारतवर्षमनाथभूमिः। भारतीया अर्थार्जनाय दक्षिणाफ्रिकादेशं गताः। एवमर्जितादर्थाज्जीवितोऽप्यंशस्य विपन्नमातृभूम्यै प्रदानं तेषां कर्तव्यम्। सन्ततमयुक्तप्रदेशानां विषमदुर्भिक्षे षण्णवत्यब्दे नवनवत्युत्तराष्टशताधिकसहस्रतमेऽपि वत्सरे च घोरक्षामपरम्परा विवशा भारतभूमिमाक्रमत। द्वयोरप्यवसरयोर्दक्षिणाफ्रिकावासिनां साहाय्यमुपानमत्। प्रथमभागे यत्प्राप्त-द्रव्यापेक्षया द्वितीयावसरे तत्तरद्रव्यं समग्राहि। तत्राङ्ग्लजनेभ्योऽपि साहाय्यमग्राहि। तस्मादर्थमवाप प्रभूतोऽभवत्। गिरिमिटियाख्याः प्रतिज्ञाबद्धश्रमजीविनोऽपि स्वदेयांशमददुः।

इत्थमनयोर्दुष्काल्योरस्थोऽयमभ्यासोऽद्यावधि स्थायी वर्तते। भारतवर्षे मार्गजनिस्ससहाय्यार्तां दक्षिणाफ्रिकावासिभारतीयेभ्य साहाय्य प्रकाममुपनमयेत ॥

दक्षिणाफ्रिकादेशे भारतीयसेवासमुधतस्य मम सत्यमहिमा पदे पदे प्रत्यक्षीभवति स्म। सत्यमेको विशालस्तरु। स च प्रसाममपोषित सन् प्रकाम फलिष्यति। सत्यधर्मो यथा यथा-न्तरवतीर्यते तथा तथा महार्हरत्नानि हस्तमुपागच्छन्ति सेवाया विनिगोऽवकाशश्चोपलभ्यते॥

द्वादशोऽध्यायः

# हिन्दुस्थानं प्रति निवृत्तिः

**युद्धव्यतिकराभिरृत्तोऽहमचिन्तयम्।** यदिह पर मम कार्य स्वदेशे वर्तते। न तु दक्षिणाफ्रिकादेश इति। एतच्च दक्षिणाफ्रिकादेशे कर्तव्याभावान्। परन्तु द्रव्यार्जनमेव मम मुख्योद्योगो माभूदिति॥

भरतखण्डवर्तिनो मे सुहृदः प्रत्यागमनाय मा निरबध्नन्। तत्र मदीयगमनेनाधिकप्रयोजनलाभ स्यादित्यहमप्यचिन्तयम्। दक्षिणाफ्रिकादेशे कार्यनिर्वहणाय खानमहाशयो मनसुखलाल नाजर-महाशयश्च स्थितावेव। अतोऽहं प्रस्थानाय मदीयसहचरानपृच्छम्। तदनुमतिप्राप्तिस्तु बहुप्रयाससाध्याभवत्। मम प्रस्थानादेकवत्सराभ्यन्तर एव पुनरागमनं जनैरपेक्ष्यते यदि तदा सद्य प्रत्यागन्तु सन्नस्थितेन मया भवितव्यमिति समयपूर्वकगमनमन्वज्ञासिषु। समयबन्धोऽय मम कठिन प्रत्यभात्। तथापि प्रेमपाशबद्धोऽहमिम प्रत्यपासि॥

गोवर्धनधरेणाह स्वामिना प्रेमसूत्रत नीतास्मि बन्धनं यस्मादासी तस्यास्मि सर्वदा—इति श्रीमत्या मीराबाईमहाशया वाचापम्य मदीयस्थिते समञ्जसमासीत्। प्रजावाण्येव हि पारमेश्वरी वाक्। मम मित्रवाक्यमनिराकरणीयमासीत्। अतोऽहं समयमङ्गीकृत्य हिन्दुस्थान प्रयातुमनुज्ञामवापम्॥

अस्मिन्नवसरे पर नातालदेशेन मम निकटसम्बन्ध आसीत्। तत्रत्या भारतीया प्रेमामृते मामाप्लावयन्। स्थले स्थले ममाप्रच्छनाय सभा हि मिलिता। महार्हाश्चोपदा मे प्राददु॥

पुरा पण्यवस्तुतनाटमनाधिकसहस्रमपि वर्षे हिन्दुस्थान प्रस्थास्यमानेन मित्रा प्रीतिदाया मयाकम्यन्त। परन्त्वरेस्मिन्विसर्जनसमारम्भो महत्तर आसीत्। प्रीतिदायेषु न केवलं सौवर्णराजताश्च पदार्था अपि तु वज्रखचितान्यपि वस्तून्यासन्॥

एतानि वस्तूनि स्वीकर्तुं को वा ममाधिकारः । तानि मया स्वीक्रियन्ते यदि प्रतिकृत्यमन्तरेण लोकसेवा चिकीर्षोर्मम कथं वा चेत ममाधीयेत । मदीयव्यवहारैर्लोकैर्मैंनोगोपभोगीति-दायान्मुक्ता येषां सर्वेऽपि प्रजासेवार्थमेव प्रदत्ता आसन् । किं च व्यवहारिणाम्मिरमित्राणां च भेदमास्थापयितु नावकाश आसीत् । यतो मदीयकार्यिका सर्वेऽपि सार्वजनिककार्येपूपस्कार एवासन् ॥

एतेषां प्रीतिदायानां मध्ये पचाशद्गिनी (अष्टशतरूप्यक) मूल्यः सारसहार एकः कस्तूरबाईमहाभागार्थे निर्मापितः आसीत् । किन्तु तस्यापि मदीयसार्वजनिक सेवानवसरादेयो-पलब्धत्वादितरेभ्यः पृथक्कर्तुं नाशक्नवम् ॥

यन्मानप्रामिदिवसे रात्रौ नाहं न्यद्रामिषम् । योचनापरायः सन् इतस्ततः कोष्ठे गमनागमनमकरवम् । तथापि प्रतिपत्तिमूढोऽस्मि स्थितः । पर सहस्ररूप्यकसमितमुपहार दूरत्यक्तमशक्यत । तस्य स्थापनं तु ततोऽपि दुष्करं प्रत्यभात् ॥

अहं तावदमूनि वस्तूनि स्वगृहे स्थापयेयम् । पर मदीयदारापत्यानां का गतिः । अमी हि सेवयैव जीविनं यापयितव्यमिति मया शिक्ष्यन्ते स्म । सेवाया इतरं प्रतिफलमाभस्तदीयबुद्धि-गोचरी क्रियते स्म ॥

अस्मद्गृहे महार्हवस्तूनि नैव स्थितानि । अस्मदीयजीवितमत्रमा सरलसरलं समपद्यत । एवं स्थितेऽस्माभिः सुवर्णघटितमणयानि कथं धारणीयानि । आभरणभ्रान्तिर्दूरीकरणीयेति तदानीमपि लोको मया बोध्यते स्म । मया ग्राम रत्नाभरणवस्तुभिः किं करणीयम् ॥

इमानि वस्तूनि सर्वथा न परिग्रहितव्यानीति निश्चयम् । योजनां कृते तद्रक्षणाय पारसी-रस्तमजीप्रभृतीन् लोकान् धर्मदर्शित्वेन नियुज्य लेख्यमकरवम् । श्वो भूते भार्यापुत्रांश्च सर्वेभ्य तैर्नन्त्रयित्वा चिन्ताभारनिर्मुक्तोऽभवम् ॥

प्रस्तावेऽस्मिन्भार्या सम्मते दुर्ग्रहत्व कुमाराणामप्रतिरोधनत्व च मम विदितमेवासीत् । तस्मादिमे बालका मध्यस्थाविति कर्तव्या इति निरचैषि ॥

बालका मदीयसूचना सद्य स्वाङ्गीचक्रु । तेऽब्रोचन्—

एतैर्महार्हबहुमूल्यैर्न हि न कार्यमस्ति । तानि प्रदातृजनेभ्यः प्रत्यर्पणीयानि । यदि तत्सदृशानि वस्तून्यपेक्ष्यन्ते तदा स्वयं तानि क्रेतुमर्हानि ॥

अहं मनुष्टस्तानपृच्छम्—एवं नर्हि युष्मदीयसम्मत्येनाद्वीजायां नानेष्ये ॥

ते प्राहु—अवश्यमेव । तद्युष्मत्कलभाम्मास्मारस्तु । विनेतान्याभरणानि नव भार्यास्त्याणि । सा क्रियास्मदर्थमेव तेभ्य स्पृह्यते । अस्माभिरेतेषु विहारेषु विभिन्नतया तत्परिग्रहेऽभिनिवेष्टव्यमिति ॥

परमेतत्सुखं च न तावत्सुखकरमासीत् ॥

मम भार्याऽवादीत्—भवतस्तावदिदं न स्पृहणीयं स्यात् । भवदीयकुमाराश्च नेदमपेक्षेरन् । ते प्रोत्साहिता भवद्वाक्यमनु नरीनृत्यन्ते । मयापि न धारणीयमित्यस्यार्थमप्यहं जानीयाम् । परं मम स्नुषाणां का गतिः । तासामप्येतदनपेक्षणीयं वा । भवतानेन नु भार्येति को हि विवादः । एतादृशान् प्रीतिदायानाहं सर्वथा प्रत्यर्पयेयमिति ॥

एवं वाग्धारा तदनु पोषिणी नेत्राम्बुधारापि च प्रावहत् । तथापि बालका वज्रमनस्का स्थिताः । अहं तु निष्कम्प एव ॥

अथैनां मृदूक्तिभिस्तामवोचम्—युज्यते । पुत्राणां विवाहः कार्य एव । परन्तु बाल्यवयस-स्तान्विवाहयितुं नाहमिच्छामि । वयं प्राप्य तदेतत्सर्वं स्वयमेव ते निर्णेष्यन्ति । किं च रत्ना-भरणगृध्नू कन्यास्तदर्थं वयं न वृणीमहे । अथ कियन्तिचिदाभरणानि अवश्यमेव कारयितव्यानि चेत्तदा त्वहं पलायिष्ये । त्वं मा प्रक्ष्यस्येवेति ॥

भार्या प्रत्यवोचत्—

किं नाम प्रष्टव्यम् । न खलु भवान्मे न विदितं मदीयमाभरणसर्वस्वं भवता विनाशितम् । मया तत्कारणमसहमानो भवान् ननु स्नुषाणां पुनरस्तान्युपहरिष्यति । अद्यप्रभृत्येव बालकानव-धूतान्कर्तुं व्यवसितो भवान् । ननु सर्वथा नाहमाभरणानि प्रत्यर्पयिष्ये । मम हारस्योपरि भवतः को वाधिकार इति ॥

अथाहमपृच्छम्—

हारोऽयं भवत्कृताया सेवाया कृते प्रादायि किं वा मत्कृतसेवाया इति ॥

" तत्तावदुच्यते । भवत्कृतसेवाया मयापि सेवा कृता स्यादिति मन्ये । भवतः कृते रात्रिंदिवं मया अपरिश्रान्तम् । तद्भवत्कृतसेवा ते न गणनामर्हति तदानीममुनाममुत्रान् स्वैरमेव गृहमानयन् मां रोदं रोदं परिश्रमय्य च परं प्रैष्यमकारयद्भवान् । हन्त सर्वस्यास्य गणना कुत्र सम्भवेदिति ॥

इमे वाणास्तीक्ष्णा अभवन् । तेषां केचिद्धृल्लग्ना प्राहरन् । तथापि रत्नाभरणानां प्रत्यर्पणस्य मया पूर्वमेव निश्चितत्वात्कथंकथमपि भार्यामसान्त्वयम् । यानि मया पण्णवत्युत्तराष्टादशाधिकसहस्रतमे वत्सरे लब्धानि रत्नाभरणवस्तूनि तानि प्रत्यार्पयम् । धर्मदर्शिलेख्यमेव कृत्वा वा धर्मदर्शिनां ▪ लेख्यानुसारेण सार्वजनिककार्येषु यथासमयं तेषां विनियुज्यतां नियम्य क्वचिदद्रव्यनिक्षेपागारे तान्यक्षेपयम् । अनेनैव सार्वजनिककार्येष्वावश्यकता प्राप्य यद्यप्यहमे-तानि वस्तूनि विक्रेतुं सर्वस्वतन्त्रस्तथापि तन्निरपेक्ष एव पुष्कलधनं सम्ग्रहीतुमशकम् । अद्यापि तदेवाभरणं तिष्ठति । अपि चैतदुपचीयमानं वर्तते ॥

एवं कृतवतो मम न कदाप्युत्साहोऽजनि। गच्छत्सु दिवसेषु मम भार्यापि तदौचित्य-मजानात्। इदमस्मान् वह्नीभ्यो दुराशाभ्यस्समरक्षत्॥

सार्वजनिककर्मेवासमुचकैर्महार्हैरनुमानानि नत्र स्वीकर्तव्यानीति दृढं मे मतम्॥

## त्रयोदशोऽध्यायः

# पुनश्च हिन्दुस्थाने

इत्थमहं स्वदेशं प्रति प्रस्थितः। मार्गे 'मोरीश्यस'-द्वीपं प्राप्तः। तत्र नौकायानस्य चिराया-वस्थानादवकाशमुपलभ्याहमेतद्द्वीपस्य स्थितिगती प्रायः सम्यगेवाज्ञासिषम्। तत्रत्यराज-कीयप्रतिनिधेः 'सर चार्ल्स ब्रूस' महोदयस्य प्राघुणीभूय रात्रिमेकामत्यवाहयम्॥

हिन्दुस्थानं प्राप्य कतिचिद्दिनानि देशपर्यटनेनायापयम्। तदानीमेकोत्तरनवशताधिक-सहस्रतमो वत्सरः। तद्वर्षस्य राष्ट्रमहासभा कलिकातानगरेऽधिनिवेशन्यभूत्। दीनशा-एदल्जी-वाच्छा (इदानीं 'सर' बिरुदधारी) महाशयेनाध्यक्षतापदमास्थेयमासीत्। अहमपि महा-सभामगच्छमिति न पृथगवक्तुमावश्यकम्। अयमेव मे महासभायाः प्रथमोऽनुभवः। मोहमयी-नगरात् सर-फिरोजशा-मेहेता-महाशयेनोपस्थितमहासभार्थं सहाहमपि प्रास्थिषि। यतस्तेन सह दक्षिणाफ्रिकादेशस्य स्थितिमधिकृत्य वक्तव्यं स्थितम्। स तावत् पृथगेकां शकटीं भाटयित्वा प्रयाणमकरोत्। राजभवनेन जीवनमसौ निर्वाहयति स्मेति मम विदितमासीत्। प्रयागमध्ये कञ्चित्कालं तदीयशकटीं प्रविश्य मया सम्भाषितव्यमिति प्रागनुज्ञप्तस्तदनुरोधेन तन्निर्दिष्टे योहाचनिवेशने तस्य शकटीं गत्वा तमनाजेतयम्। तदानीं वाच्छा-महाशयः श्रीमान् (अथ 'सर' बिरुदधारी) चिमनलाल-सेतलवाड-महाशयश्च तेन सहोपविष्टावास्ताम्। सर्वेऽप्येते राजकीय-प्रस्तावान् रचयन्ति स्म। सरफिरोजशामहाशयो दृष्ट्वैव मामकथयत्। गान्धे तव कार्यमुद्दिश्य न किञ्चित्कर्तुं शक्यत इति प्रतिभाति। त्वदिष्टानुरोधेन प्रस्तावं तावद्दास्यामहे। किन्तु स्वदेशेऽप्यस्माकं कियानधिकारः। स्वनिलय एव यावदधिकारोऽस्माकं न घटते तावन्न्या-स्यवर्तिनामस्मदीयानामवस्थापरिवर्तो दुर्लभ इति। अहमेतेन खिन्नतानुगतोऽभवम्। अयमाशयः सेतलवाडमहाशयस्याभिमत एवाऽऽसीत्। वाच्छामहोदयः सानुकम्पां दृष्टिं मयि व्यकिरत्। सरफिरोजशामहाशयः मदीयमनःसमाश्वासयितुमिह प्रायतिष्ट। नाम्नो राजन्यामात्येऽपि कार्यतो मोहमयीनगरस्य परिवृढस्तत्रत्यस्य तस्याशीर्वादेन मादृशो जनः किं न साधयेत्। तदहं महासभायां मदीयप्रस्तावोपस्थापनं तेनाभ्यनुज्ञानमात्रेणैव समतुष्यम्॥

प्रस्तावपत्रमारोप्य मे प्रदर्शयन्तु भवन्त इति याच्छामहोदयो ममोत्तेजनप्रदिल्पयारुन्धत् । तस्मादह मदीयकृतज्ञता प्राव्याप्याज्यमहितोत्तरलोहाध्वनिवेशनस्थिताया धूमशकट्या ततोऽ तितीर्य स्वशकटीमगच्छम् ॥

अथ कलकत्तानगर वयमासादयाम । सभाध्यक्ष स्वागतमण्डल्या विभागोत्तरवसतिमनाथि । मया कुत्र गन्तव्यमिति स्वयसेवकमहमपृच्छम् । स मा रिपनमहाविद्यालयमनैषीत् । तत्र हि बहूना प्रतिनिधीना वसति परिकल्पितासीत् । मयाध्युषितविभाग एव मदीयभाग्यवशा- त्तत्रभवान् लोकमान्योऽप्यवर्तत । स च मदागमनादेकदिनोत्तर तत्र प्राप्त इति स्मरामि ॥

निसर्गतो लोकमान्यस्य सनिधौ जनास्थानी सर्वदा वर्तते स्म । स च प्रदेशस्तत्रो- पविष्टजनसमाज इत्येतत्सर्वं स्फुट मे स्मृतिपथे वर्तते । यद्यह चित्रकरोऽभविष्य तदा मचोपविष्ट तत्रभवन्तमचित्रयिष्यम् । तद्दर्शनार्थमागतेष्वसख्येषु जनेष्वेकस्यैव नाम मयाद्य स्मर्यते । स च "अमृत बझार" पत्रिकासपादको मोतीलालघोषमहाशय । लोकमान्यस्य 'हा हा' प्रहासा राज्याधिकृतानामन्यायवर्तनमधिकृत्य प्रवृत्तस्तयोरालापश्च दुर्विस्मरो भवति ॥

अथ तत्रयानि सविधानानि सविस्तर परिशीलयिष्याम । स्वयसेवका परस्पर प्रतिबन्ध माचरन्ति स्म । कश्चिदेकस्मिन्कर्मणि नियुज्यमान सद्य एवापरमाह्वयत् । स चान्य स चान्यम् । एतन्मध्ये हन्त प्रतिनिधीनामवस्था त्वनिर्वचनीयासीत् ॥

कतिभिश्चित्स्वयसेवकैरह मैत्रीमकल्पयम् । तेभ्यो दक्षिणाफ्रिकासबन्धिन काश्चिद्वृत्तान्तान् न्यवेदयम् । एतेन ते मनागजिह्मयु । सेवायास्तत्त्वमेतान् बोधयितुमयतिषि । ते च तत्प्रायेणाबु- ध्यन्तेव । तथापि सेवा पात्रके निक्षिप्य प्राशयितु न शक्यते । प्रथम तावदिच्छा ह्यावश्यकी । ततोऽभ्यास । ऋजुचेतसामेषामिच्छा प्रकाममासीत् । पर शिक्षणमभ्यासश्च कुतो लभ्येत । महासभा प्रतिवत्सर त्रीणि दिनानि प्रचल्य ततो निद्रामभजत् । दिनत्रय प्रचलति वार्षिकोत्सवे कियन्मात्र ज्ञानमुदियात् । प्रतिनिधयोऽपि स्वयसेवकानुरूपा एवासन् । तैर्लब्ध शिक्षणमपि तत्सदृशमेव तात्कालिकमेव च । ते स्वय न किंचिदकुर्वन् । इद कुरु—अद कुर्विति सर्वदा स्वयसेवकानाज्ञापयन्ति स्म ॥

अत्राप्यस्पृश्यताया साम्राज्यविलास प्रत्यक्षीभवति स्म । द्राविडाना पाकशाला शाला- न्तरेभ्यो दवीयसिप्रदेशे सनिविष्टाभूत् । इमान्प्रतिनिधीन् दृष्टिदोष स्पृशति स्म । ( द्राविडदेशाना ब्राह्मणा भोजनवेलाया इतरवर्णैर्दृष्टमात्रा अपि मालिन्यमाप्नुवन्ति । अत एव ते स्वगृहेषु मद्रकाय भुञ्जते ।) तस्मादेषा कृते महाविद्यालयस्याङ्गणान्तरे किलिंजकभित्तिभि सवृता भोजनशाला पृथक्कल्पनीया भवेत् । सा च श्वासप्रतिरोधिना धूमजालेन परिपूर्णाभूत् । सैव पाकशाला सैव भोजनशाला सैव मज्जनशाला च । ततो बहिर्निर्गन्तुमवकाश एव नासीत् । मर्ममेतत्पश्यतो मनसे वर्णाश्रमधर्ममुपहसन्त इव लक्ष्यन्ते स्म । नानादिग्भ्य समागत्य महासभाया

मिलन्तु प्रतिनिधिभिश्चेत्तादृशसुव्यवस्थाप्रसङ्गो यदि दृश्येत तदा तान्दृष्ट्वा प्रीणितास्तु जनेषु तथा क्रियमाणतया भवितव्यमित्यात्मन्येवाचिन्तयम्। इदं च स्मारं स्मारमहं दीर्घनिश्वासममुञ्चम्॥

मलीमसत्वं तु दुरन्तमासीत्। परीक्ष्यमाणे सर्वत्र कर्दममेव। मलागाराण्यन्यान्येवाविद्यन्त। दुर्गन्धं स्मरतो ममाद्यापि रोमहर्षो जायते। इदमहं स्वयंसेवकेभ्य आदर्शयम्। ते तु विहस्य नि मलशोधनमस्माकं कार्यं न पुनरस्माकमिति। एषा शोधनी मे प्रदीयतामित्यहमपृच्छम्। ते म मुखमपश्यन्। अहमेका मार्जनीं सम्प्राप्य मलागारमशोधयम्। किं तु मय्येव तद्विश्रान्तिमगच्छत्। जनस्तोमस्यातिबाहुल्यान्मलागाराणामल्पीयस्त्वाच्च तानि वारं वारं समार्जनीयान्यासन्। इदं मदीयशक्तिमतिक्रान्तमासीत्। तस्मान्मया स्वानुकूल्यमात्रमवेक्ष्य सन्तोष्टव्यमापतितम्। शेषास्तदशुचित्वं दौर्गन्ध्यं च नालक्षयन्त॥

परं नेतावदेव। केचित्प्रतिनिधयः स्वप्रकोष्ठस्य बहिर्वेदिकायामेव रात्रौ मलविसर्जनस्थानानि शङ्कमकुर्वत। प्रातरिदं स्वयंसेवकेभ्य आदर्शयम्। शुचीकर्तुं न कोऽपि सन्नद्धितः। अहमेक एव तन्निर्मलीकरणमानपात्रमासम्। इदानीमत्रविषये महती व्यवस्थितिर्दृश्यते। तथाप्यद्यापि महासभामण्डपं स्वच्छन्दतो मलमूत्रादिना दूषयन्तो निर्विचाराः प्रतिनिधयो न विरला न विद्यन्ते। न च सर्वे स्वयंसेवकाः शोधयितुं सदा सन्नद्धिता भविष्यन्ति॥

महासभा तत्तादृशग्रामेऽयमध्ये ततोऽप्यधिकदिनानि प्रचलेद्यदि व्याधिप्रसरणं निष्प्रतिबन्धं स्यादिति अहमलक्षयम्॥

चतुर्दशोऽध्यायः

# लेखको भृत्यश्च

महासभादिनद्वयात्परं मेऽचिन्तयामभवत्। तत्कार्यालये मदीयसेवा यदि स्वीक्रियेत तदा तत्र कार्यमनुतिष्ठन्ननुभवं सम्पादनीय इति निरचैषम्॥

तस्मात्कलिकातानगरप्राप्तिदिवसमेव स्नानादिकं निर्वर्त्य महासभायाः कार्यालयमगच्छम्। श्री भूपेन्द्रनाथवसु-महाशयः श्री. घोषाल-महाशयश्च कार्यदर्शिनावभूताम्। आर्यभूपेन्द्रमुपेत्य मम सेवाभिलाषुकत्वमवेदयम्। स च मामभिवीक्ष्याकथयत्–मन्निकटे भवतानुरूपं न किंचित्कार्यमस्ति। किं तु घोषालमहाशयः किमपि ते प्रयच्छेत्। तत्पार्श्वं याहीति॥

श्रीघोषालमहाशयस्य पार्श्वमहमगच्छम्। स मामाशिरोऽङ्घ्रि मन्दहसितपूर्वं वीक्ष्यापृच्छत्। तत्राहं परं लेखकयोग्यं प्रयच्छेयम्। अपि त्वमेनं कुर्या इति॥

अहं प्रत्यवोचम्—अवश्यमेव करिष्ये । मदीयशक्तिमनतिक्रान्तमुद्योगं सर्वमपि चिकीर्षुः संनिधिमागतोऽस्मीति ॥

सेयं खलु साध्वी भावनेति घोषालमहाशयोऽकथयत् । परितः स्थितान् स्वयंसेवकानभिवीक्ष्याब्रवीत्—ननु श्रुतमनेन युवकेनोक्तमिति । तदनु मामवोचत्—यदि तावन्निरूप्यतामत्र भूयांसि पत्राणि पतितस्थितानि । तानि सर्वाणि परीक्षेथाः । पश्य तत्रैवासन्दी वर्तते । तामालम्ब्य कार्यमुपक्रमस्व । इह मत्पार्श्वमागच्छतः परःशताञ्जनाननु पश्यति भवान् । अहं किं कुर्वीय । किमहमेतानाभाषयेयमुताहो पत्रपुञ्जेषु मां निमज्जयतामेषां निरुद्योगिनां जनानामुत्तराणि लिखेयम् । कार्यमेतद्विधातुं मन्निकटे नैकोऽपि लेखको वर्तते । एषु पत्रेषु भूयिष्ठानि नैव मुख्यानि भवन्ति । तथापि त्वं सर्वाणि परीक्षस्व । यस्य यस्य पत्रस्य प्राप्तिः सा लेखतो निवेदयितव्येति मन्यसे तस्य तस्योत्तरं प्रेष्यताम् । यत्र पर्यालोच्य प्रतिवचनं देयं तन्मे निवेदितं कुर्विति । एतद्विश्वासेन ममानिर्वचनीयः प्रमोदः समजनि ॥

अस्मिन्कर्मणि मां नियुञ्जानस्य श्रीघोषालमहाशयस्य मत्परिचयो नासीत् । मन्नामप्रत्यभिज्ञादिकं तेन पश्चादबोधि ॥

मम कार्यं तल्लेखराशिपरीक्षणं मम सुकरमलक्ष्यत । प्रथमराशिरचिरेणैव समापितः । श्रीघोषालः सुतरामतुष्यत् । कथालापप्रसङ्गो हि तस्य स्वाभाविकः । अविच्छिन्नकथालापेनैव पञ्चषा होरास्तेन याप्यन्ते स्म । मत्सकाशान्मदीयचरित्रविस्तारमुपलभ्य स्वनियोगेन लेखकोद्योगे व्यापारितं च मां चिन्तयमानो मनागलज्जत । परमस्मिन्विषये तमेनमहं निश्चिन्तमकार्षम् । तथाहि मयोक्तम्—

अलं विचार्य । क्व यूयं क्व चाहम् । महासभासेवयैव वार्धक्यमाप्ता भवन्तः । अतो मे गुरुसमानाः । अयमस्मि परमनुभवशून्यः कनीयान् । अस्मिन् कर्मणि मां नियुञ्जानैर्भवद्भिर्महदुपकृतं मे । मम हि महासभाकार्यचिकीर्षा वर्तते । तत्कार्यकलापं विस्तरेणावगन्तुमपूर्वोऽवकाशः चिराद् भवद्भिरदायीति ॥

श्रीघोषालमहाशयोऽचकथत्—

यस्त्वयमिष्यमेव साध्वी वृत्तिः । आधुनिका युवकास्तु नैव गृह्णते । आ तज्जन्मप्रभृति महासभामहं जाने । किं बहुना । अस्याः प्रतिष्ठापनप्रसङ्गे श्रीह्यूममहोदयेन मम सहभागित्वमपि इति ॥ इत्थमावयोरुभयोरपि मैत्री समवर्धत । मध्याह्ने वयमभ्यवहारं सहैव करिष्याम इति मामुपारुधत् ॥

श्रीघोषालमहाशयस्य भृत्यो निजस्वामिनः आतरकञ्चुकस्य बन्धनं घटयति स्म । तद्दृष्ट्वा तस्य कार्यं स्वयं कर्तुमैच्छम् । ममेदमिष्टमासीत् । मम हि सर्वदा ज्येष्ठेष्वादरो महानभूत् । विज्ञातमदीयहृदयेऽस्य सम्मनोऽन्यसेवा कर्तुमवकाशं मे प्रयच्छति स्म । कञ्चुकस्य बन्धनं

घटयन्त मा सास्मितमवादीत्—ननु प्रेक्ष्यताम् । महासभाकार्यदर्शी स्वकञ्चुके बटनं घटयितु-मप्यवकाशं न लभते । सर्वदा यत्र क्वापि कर्मणि व्याप्टतो भवतीति ॥

तस्यार्जवमनुध्यायतो मम यद्यपि हासोऽजायत तथापि तत्सेवायामपि दम्यतादरो मम नोदपादि । एतत्सेवया कस्तितो लाभः परममूल्यो भवति ॥

त्रिचतुरैरेव दिवसैर्मम महासभाया कार्यवाऽनस्य मर्म हृद्गतमासीत् । भूयिष्ठानां नेतृणा-मह दर्शनमकरवम् । गोखले-सुरेन्द्रनाथ-प्रमृतीनां योधानां प्रवृत्तीरदर्शम् । काल वृथा-क्षियमाणमपश्यम् । अस्मदीयकार्येष्वाङ्ग्लभाषाया प्रामुख्यतामालोकयम् । एतेन पर विषण्णोऽभवम् । शक्तिर्वृथाक्षियते स्म । एकेन निर्वर्त्यं कर्म बहवोऽन्वतिष्ठन् । बहूनि महत्त्वपूर्णानि कार्याणि न कस्यापि कार्याण्यासन् ॥

मदीयमानसं यद्यपि दोषानिमान् सूक्ष्मतया व्यलोकयत् तथापि प्रकामोदारमासीत् । तस्मादहमामानमित्यमबोधय यथयाकार्यं प्रचलति स्म ततोऽपि साधीयसा मार्गेण तच्चालयितुम शक्यं स्यादिति । इत्थमनुसन्धानवशात्कार्यस्य कस्यापि न्यक्कृतिभावनाया नावकाशोऽभवत् ॥

पञ्चदशोऽध्यायः

# महासभायाम्

अथ महासभामिरन् । स्वर्णायतया सज्जीकृत महामण्डप विभवोत्तरतावद्व्यूहं स्वयसेवकगण वेदिकामभ्यासीनान्श्रेयोधुरयान्श्च निभालयन्नाश्चर्यचकितोऽभवम् । अस्मिन्महति समाजे क्वाहमिति निरायोऽजायत ॥

सभाध्यक्षस्य भाषणं तावदेकं पुस्तकमेवासीत् । तत्काऽत्स्न्यात्स्मृत्वा वाचयितुमशक्य-त्वादित निश्चित् तत किंचिदुपादाय सभाया तदपाठि ॥

तदनु विषयानिर्धारिणीमभिते सदस्यानां वरण समवर्तत । गोखलेमहाशयो मा समितिन्दृष्टाननयत् ॥

सरफिरोजशाहमहाशयेन तावन्मदीयं प्रस्तावमङ्गीकर्तुं प्रतिपन्नमासीत् । किन्तु तेन स प्रस्तावो विषयसमिते पुरो नेतव्य कदा—इति चिन्तयन्नहमुपाविष्टोऽभवम् । प्रतिप्रस्ताव दीर्घभाषणं चलति स्म । तच्च पुनराङ्ग्लभाषया । प्रतिनिर्णयमुपष्टम्भको य कोऽपि प्रस्ताव-नायक पश्चादवतिष्ठते स्म । एतादृशमेरोनिर्घोषमध्ये मम गिञ्जन क शृणुयात् । यथा यथा निशामुख प्रत्यासदत् तथा तथा मे हृदय वेगेन धडधडायितु प्रावृतत् । यथाहमिदानीं स्मरामि

तथा प्रस्तावा चरमगृहीता निबुद्वेगेन व्यद्राव्यन्त । सर्वोऽपि ततो निर्गन्तुमुद्यतो भवति स्म । अथ रात्राविकादशाहोरावादनवेला समुपस्थिता । अहं वक्तुमधीर स्थित । प्रागेव मया दृष्टेन गोखले-महाशयेन प्रस्तावो मदीय पठित आसीत् । अहं तस्य पीठमुपसृत्य शनैरवोचम् । यथा कथापि भवद्भिरहमुपकर्तव्योऽस्मीति । स मामग्रह स्म । तत्र प्रस्तावो मया न विस्मृत । इत्य सभ्रमो ननु प्रत्यक्ष एव । तथापि प्रस्तावमेन विस्मर्तु नाहमवकाश दास्य इति ॥

अथ सरफिरोजशामहाशयोऽब्रवीत्—अद्यतन कार्यकलाप समाप्तिमागत खलु । तदनु गोखलेमहाशय प्रोच्चैरघोषयत्—ननु दक्षिणाफ्रिकाप्रस्तावोऽद्यापि तिष्ठति । आर्यो गान्धि कियता कालेन समीक्षमाण स्थित इति ॥

अपि प्रस्तावोऽय भवता दृष्ट इति सरफिरोजशामहाशयोऽपृच्छत् ॥

अथ किम् ॥

तमत्रभवान् कच्चित्सगत मन्यते ।

सगतमस्ति ॥

यदि तावद्वाच्यतामिदानीं गान्धे ।

अहं कम्पमानस्तमवाचयम् ॥

अथ सर्वैरुद्घुष्ट सर्वसमत्या स्वीकृतोऽयमिति ।

वाच्छामहाशयो मामवादीत्—गान्धे इत पर सभाया भाषितु तव निमिषपञ्चकमवकाशो विद्यत इति ॥

कार्यक्रमोऽय न मा पर्यतोषयत् । प्रस्तावमर्थतो ग्रहीतु न केनापि प्रायासि । सर्वोऽपि निर्गमनाय त्वरते स्म । गोखलेमहाशयेन प्रस्तावो दृष्ट इति हेतोरन्यैस्तस्य पठनमवबोधश्च नावश्यक इति बतामन्यत ॥

अथ निशा प्रभाता । तद्दिने मया भाषितव्यमविकृत्याहमचिन्तयम् । पञ्चभिर्निमिषै किं भाषितव्यम् । सम्यग्गृहीतविषयस्यापि यथोचितशब्दाना न स्फूर्तिरासीत् । भाषण विलिख्य न पठितव्य किन्तु तत्रैव स्थित्वा भाषितव्यमिति पूर्वमेव निश्चयोऽकारि । परन्वसकृदुपयासितु दक्षिणाफ्रिकादेशे यथा ■ कृतोऽभ्यास सोऽत्र विलुप्ति गत इवालक्ष्यत ॥

उपगते मदीयप्रस्तावसमये वाच्छामहाशयो मन्नामधेयमघुषत् । अहमुत्थाय स्थित । मम शिरो घूर्णति स्म । यथ कथमपि प्रस्तावमवोचयम् । तत्र कश्चित् स्वप्रणीत पद्यप्रबन्धमेव मुद्रापयित्वा प्रतिरूपकाणि प्रतिनिधिभ्य सव्यभाजयत् । स च विदेशयानसमुद्गल्घन-प्रस्तावस्थो ग्रन्थ । अहमेक पद्य वाचयित्वा दक्षिणाफ्रिकादेशेऽस्मदीयजनानां क्लेशजातमुद्दिश्य द्वित्रवचनान्यवदम् । तत्क्षणमेव वाच्छामहाशयो घण्टामनादयत् । भाषमाणस्य ममापि पञ्च-निमिषा न व्यतीता इत्यह दृढमवदम् । शिष्टेऽपि निमिषद्वये प्रागेव मम प्रबोधनाय घण्टा

वादितेति न मे विदितमासीत्। अन्येषु होरैकाङ्के पादोनहोराङ्के च मानमाणेष्वपि घण्टा न वाद्यते स्मेति मया प्रत्यक्षीकृतमासीत्। तस्मादहं विरम्यो घण्टावादनोत्तरक्षणमेवोपविष्टोऽभवम्। तथापि मदीया वाग्युद्धिस्तत्पक्षबलेन सरफिरोजशामहाशयस्य प्रयुक्ततर्कतडिदित्यलक्ष्यत। महासभया प्रस्तावस्य स्वीकृतिप्रकारं प्रति किमु वक्तव्यम्। स्थाने प्रतिनिधीनां प्रेक्षकाणां च भेदबाहुल्यं नादृश्यत। सर्वेऽपि हस्तमुदयच्छन्। सर्वेऽपि प्रस्तावा ऐकमत्येन स्वीचक्रिरे। मदीयप्रस्तावस्यापि गतिरभिन्नैवासीत्। तस्मान्मदीयदृष्ट्या प्रस्तावस्य महत्त्वं सर्वमयथार्थमितिनैव। तथापि महासभया स्वीकृत इत्येतावदेव ममानन्दमुत्पादयितुं पर्याप्नोत्। महासभाया मतमिति नाम निश्चितभारतवर्षस्य स्वीकारचिह्नमित्येषा भावना कस्य वा प्रमोदं न जनयेत्॥

षोडशोऽध्यायः

# लॉर्डकर्झनराजास्थानम्

**महासभामेलनं** तावद्वृत्तमासीत्। किन्तु दक्षिणाफ्रिकादेशार्थं मया व्यापारमण्डली (चेम्बर आफ कामर्स) प्रभृतयः संस्था द्रष्टव्या अभूवन्। इदमुद्दिश्य कलकत्तानगरेऽहमेकमासमतिष्ठम्। अस्मिन्नवसरेऽहमतिथिमन्दिरे स्थितिमगृह्णाम्। व्यक्तिपरिचयं प्रायः 'इण्डिया क्लब' इत्यत्र कोष्ठके यत्नेन समपादयम्। अस्याः संस्थायाः सदस्येषु केचन प्रमुखा भारतीया आसन्। तत्परिचयं लब्ध्वा दक्षिणाफ्रिकादेशस्य कार्यमुद्दिश्य तेषु किंचित्कुतूहलमुत्पादयितुमाशा ममासीत्। एतत् 'क्लब्-मन्दिरं' गोखलेमहाशयो 'बिलियर्ड' क्रीडार्थमागच्छति स्म। कलकत्तानगरे मया नियतं कालं स्थातव्यमिति ज्ञात्वा स्वमन्दिर एव वस्तुं मामामन्त्रयत्। तदामन्त्रणमहं कृतज्ञतापूर्वकमङ्गीकृतवान्। किं तु स्वयमेव तत्र गमनं मे नारोचत। स च मासैकाहं वा दिनद्वयं वा प्रतीक्ष्य स्वयमेवागत्य गृहमनयीत्। मदीयसंकोचप्रकृतिमवबुध्य सोऽभ्यधात्। तथा आर्य गान्धिमहाशय भवद्भिरस्मिन्नेव देशे किल स्थातव्यम्। तस्मादेवंविधः संकोचो न युज्यते। यावद्धि शक्यं तावद्भिर्जनैः सह सम्बन्धो भवद्भिर्घटनीयः। महासभायाः कार्यं भवद्भिः करणीयमित्यस्ति ममाभिप्राय इति॥

गोखलेमहाशयेन सह ममावस्थितिं प्रकृत्य वृत्तान्तो यावत्र वर्ण्यते तावत्तत्र 'इण्डिया क्लब' मन्दिरे संवृत्तः कश्चिदनुभवो निगद्यते॥

प्रायोऽस्मिन्नेव समये चक्रवर्तिप्रतिनिधिना लॉर्डकर्झनमहोदयेन सज्जिता राजसभा प्राचलत्। तदर्थमाहूताः कतिपये राजानो महाराजाश्चैतत् 'क्लब् मन्दिर' अध्यवसन्। तत्र-

स्थितैरेतैः सुन्दरं वङ्गदेशीयमन्तर्वेषपथ्यकमचप्राावारकं धार्यमाणं मया प्रत्यक्षीक्रियते स्म। राज-सभोपस्थानदिवसे भरण्यभुजः इवाप्रपदीनायुष्णीषान् विराजमानचार्मणपादूश्च तेऽधारयन्त। इदमालोकमानस्य मम विषादोऽजायत। तेषामेकमहमपृच्छम्—कुतोऽयं वेषपरिवर्तनमिति॥

स च प्रत्यवादीत्—यथास्मदीयदुःखमस्मद्वेषमेव। स्वविभवविरुदसंरक्षणाय कियन्तो चापमाना सोढव्या इत्यन्ये कथं जानीयुः इति॥

"परमेतानि भुजिष्यधार्याणि शिरोवेष्टनानि तद्योग्या पादुकाविशेषाश्च कुतो धार्या ते।"

भुजिष्याणामस्माकं च वैलक्षण्यमस्तीति किं भवन्तो मन्यन्ते। यथामी गृहे न किङ्करास्तथा वयं च लॉर्डकर्झनस्वामिनः किंकरा स्म। यद्यहमेतस्या सभाया न संनिधास्ये तदा तत्फलं मयानुभवितव्यं स्यात्। सामान्यवेषधारी यद्यहमुपतिष्ठेय तथापि दोषत्वेन गण्यते। अथ चैवात्मानं सनह्य तत्रोपससवत कर्झनप्रमुखा सहालपितुमवकाशो लभ्यत इति किं भवन्तो मन्यन्ते। लेशतोऽपि न हीति॥

ऋजुहृदयमित्रस्य दशा दृष्ट्वा मम कारुण्यमुदपद्यत॥

एतदुपोद्घातादीदृशस्यैवान्यस्य राजास्थानस्य स्मृतिरायाति॥

लॉर्डहार्डिंगमहोदयेन यदा काशी हिन्दु-विश्वविद्यालयस्य प्रतिष्ठा कृता तत्काल तदास्थानमचलत्। तदानीमपि राजमहाराजकदम्बकं मिलितमासीत्। मयापि तत्र संनिधातव्यमिति भारतभूषणश्रीमालवीयमहाशयैः सोपरोधमामन्त्रितः सन्नहमप्यगच्छम्॥

परं वनिताजनयोग्यवेषधारिणो महाराजाश्च वीक्ष्य विषादमगमम्। अहो कौशेयाप्रपदीनं कौशेयदीर्घकवचं उरसि वज्रमौक्तिकहारा बाहोरङ्गदबन्धा उष्णीषोपरि वज्रमौक्तिकस्तबका। एतैः सह सौवर्णकोशनिविष्टा खड्गलता कटिबन्धतोऽप्यालम्बन्त॥

एतानि न तेषां राज्याधिकारस्य चिह्नानि परं तदीयदासत्वस्य बहुलाञ्छनानीत्यहमवेदिषम्। तेऽमी निजवैमल्यचिह्नानि एतानि स्वच्छन्दतः पर्यगृह्णन्तेति ममासीन्मनीषा। परन्तु पश्चादवगतं मया यदेवंविधेषु समेलनेषु राजभी रत्नभरणान्येतानि अवश्यमेव प्रतिमोक्तव्यानीति नियमो विघत इति। अन्यच्च मया विज्ञातं यदेव भूषणैरात्मनः परिष्कारं केषाचिन्नितान्तमसह्यमासीत् तैश्चाभरणान्येतादृशेष्वेव सदर्भेष्वधार्यन्त न पुनरन्यदेति॥

एतद्वचनं नियमयन्तामास्थान इत्यहं न जाने। परन्तु तैरेतदाभरणजातमन्यदा धार्यता न धार्यता वा तथापि सार्वभौमप्रतिनिधेरास्थाने महिलाजनयोग्यभूषणैरात्मानमलङ्कृत्य तैः संनिधातव्यमिति नियमो न किं नितान्तविषादकरः॥

अहो धनसम्पत्तिप्रभुत्वमहत्त्वाभिमानैर्मनुष्य पापानर्थरूपं नियन्त्र्यस्य प्रदार्श्यत॥

सप्तदशोऽध्यायः

# गोखलेमहाशयेन सहैकमासः ( १ )

गोखलेमहाशयः स्वगृहे मदागमनप्रथमदिनात्प्रभृति यथा मम पारवश्या बुद्धिर्न सम्भवेत्तथा समयापात्। कनीयसि भ्रातरीव मय्यवर्तत। मदपेक्ष्यमखिलं ज्ञात्वा तदनुकूलसविधानान्यकारयत्। भाग्यवशान्मदपेक्ष्यमत्यल्पमेवासीत्। स्वकार्याणि स्वयमेव कर्तुमभ्यस्ततया ममान्यसेवासापेक्षता प्रायो नासीत्। मदीया स्वावलम्बनता मदीयमङ्गशौचं वस्त्रशौचं च मदीय उद्यमो नियमाचरणं चेतत्सर्वं तस्य मनागाहत। एतदवलोक्य मम विस्मयं जनयन् परं मामश्लाघत॥

सर्वमागतं मयि विश्रम्भेण प्राकाशयत्। स्वसन्निधिमागतानां प्रमुखपुरुषाणां परिचयं ममाकारयत्। तेषां जनानामिदानीं डाक्टर ( अद्य 'सर' विरुदधारी ) प्रफुल्लचन्द्र-रॉयमहाशय सुस्पष्टं मे स्मृतिमायाति। स हि गोखलेभवनस्य समीप एव कृतनिवासः सर्वदा तत्रागच्छति स्म। तस्य परिचयं मामेवं बोधयन्नकारयत्—

"इमे खलु प्रतिमासमष्टशतरूप्यकाणामर्जितारोऽपि स्वकीयव्ययार्थं परं चत्वारिंशद्रूप्यकाणिक्षिप्य शेषमखिलं सार्वजनिककार्येषु विनियुञ्जानाः प्रोफेसररॉयमहाभागाः। अनूढा इमे। न च विवाहयितुमिच्छन्तीति॥"

अभ्यागतनरॉयमहाशयस्य तदानींतनाध्यापकरॉयमहाशयस्यापि न कोऽपि भेदो दृश्यते। पूर्वं यथा साधारणं नेपथ्यमपोषयत् साम्प्रतमपि तथैव सामान्योऽस्य वेषः। परमिदानींतनं 'खादीवासः' इति विशेषः। पूर्वमेभिः खादीवसनं न धार्यते स्म परं स्वदेशशिल्पालयोत्पन्नं वासः। गोखले-डाक्टर-रॉय महाशयो: कथालापेन नाहमतृप्यम्। स हि कथालापो देशसम्बन्धिना वा विषयाणां चर्चाज्ञानमधिकृत्य वा जिज्ञासा समासीत्। कश्चिद्विषयानाकर्णयतो मम दुःखं च जायते स्म। ते हि विषया नेतॄणां दोषोद्घाटनरूपा अभूवन्। यानह महायोद्धृगणाय तेऽमी क्षुद्रका इति मे बुद्धिरुदेतुमारभत॥

गोखलेमहाशयस्य कार्यानुष्ठानरीतिर्यथा प्रमोदकरी तथा शिक्षाप्रणयिनी च। असौ नैकमपि क्षणं वृथाक्षपयत्। तस्य कथालापस्य सर्वस्या सर्वेऽपि देशकार्यार्थमेव। तद्वाक्यमसत्यस्य छायामपि कार्पण्यस्य चिह्नमपि नाविष्करोत्। हिन्दुस्थानस्य पारतन्त्र्यं दारिद्र्यमित्यादिकमेव सर्वदा तस्य चिन्ताहेतुरासीत्। कार्यान्तरेषु तं प्रवर्तयितुं बहवो जनास्तमुपसर्पन्ति स्म। ते सर्वेऽप्येकमेवोत्तरमलभन्त। तद्यथा—

"एतत्कार्यं युष्माभिरेव क्रियताम्। मत्कार्यमनुष्ठातुं मा मुञ्चत। देशस्य स्वातन्त्र्यसम्पादनं तावन्मयापेक्षितम्। तस्मिन् प्राप्ते कार्यान्तरं मे बोधयत। अद्य पुनरेतत् कार्यकाव्यवस्य मम क्षणमात्रमवकाशो वा एकश्वासशक्तिर्वा नावशिष्यत इति॥"

रानडेमहाशये तस्य गौरवं तु वाचि वाचि प्रत्यक्षीभवति स्म । तथाहि । रानडेमहाशया-प्राड्विवाकरिति वाक्यं तस्य वेदोक्तिरासीत् । तदेव परमप्रमाणतया तेनोपन्यस्यते स्म । तत्र स्थिते मयि रानडेमहाशयस्य जयन्ती (पुण्यतिथिर्वा न सम्यक् स्मरामि ।) समागता । अयमुत्सवो गोखलेमहाशयेन नियमेन निरवर्त्यत । तस्मिन्नवसरे तदीयमुहृदौ प्रोफेसर-ग्रावटे-महाशयोऽन्य कश्चन प्राड्विवाकश्च (सबजज) जयन्त्युत्सवार्थमामन्त्रितौ सन्यविधानाम । तदानीं रानडे-महाशयमधिकृत्य निजस्मृतिपथवर्तिनः कांश्चिद्वृत्तान्तान् गोखलेमहाशयोऽवर्णयत् । रानडे-तेलंग-मण्डलिक' इति त्रयाणां पुरुषाणां परस्परं तारतम्यमदर्शयत् । तेलंगमहाशयस्य मनोहरां भाषण-शैलीमश्लाघत । मण्डलिकं सुधारकदृष्ट्या प्राशंसत् । व्यवहारिजनं प्रति तस्य कर्तव्यपालनं दृष्टान्तयितुमेकां लघ्वीं कथामकथयत् । तथाहि । तद्दिनस्य धूमशकटी तदागमनात्पूर्वमेव प्रचलिता । ततो यः स्वकार्यिकस्य व्यवहारमुद्दिश्य काले न्यायसभां जिगमिषुः पृथग्धूमश-कटीमेकां भाटयित्वा प्रस्थित इति । अथ रानडेमहाशयस्य सर्वतोमुखानां शक्तिमुपवर्ण्य यथासौ महापुरुषस्तत्कालीनसर्वनायकानप्ययशोतेति प्रादर्शयत् । रानडेमहाशयो न केवलं परमनिष्णातः प्राड्विवाकोऽभूदपि तु प्रगल्भतमोऽर्थमितिहासकृदर्थशास्त्रवेत्ता सुधारकश्चासीत् । असौ राजकीयाधिकारी भवन्नपि धीरस्वभावः प्रेक्षको भूत्वा महासभामागच्छति स्म । तदभिज्ञता प्रति सर्वोऽपि तथा व्यश्वसीद्यथास्य निर्णयं समस्तैरपि निर्विवादमङ्गीक्रियते स्म । एवं स्वगुरोः समवायिनीं बुद्धिशक्तिं हार्दिकगुणसंपत्तिं च वर्णयतो गोखलेमहाशयस्यानन्दो नात्मनि प्राभवत् ॥

तत्काल गोखलेमहाशयस्तुरगरथमेकमस्थापयत् । तत्रागमस्य कथमावश्यकं संवृत्त-मिति न मे विदितमासीत् । अस्मिन्विषये मदीयमसंतोषं तस्मै न्यवेदयम् । स मयाप्रच्छि । विद्युद्यानेन (ट्राम) भवद्भिः कुतो न गन्तव्य एव कृते नायकानां गौरवं किं परिहीयेतेति ॥

इदं श्रुत्वा स मनागिव खिन्नः प्रत्यवादीत्—

भवानपि मे हृदयमवगन्तुं किं न शक्नोति । न्यायनिर्णायकमण्डलाप्राप्तं यद्धनं तत्स्वार्थे न व्यययिष्यामि । विद्युद्यानेन गच्छतो युष्मानवलोकयतः मम मानसं मनाक्खिन्नं जायते । किन्तु स्वयमपि तथा कर्तुं न शक्नोमि । अहमिव भवानपि यदि सार्वजनिककार्येषु तीव्रकुतूहली स्यात् तदा भवतोऽपि विद्युद्यानेन प्रयाणं न संभाव्येत । पर्यन्ते कष्टमप्यनुभवितव्यम् । नायकैर्यद्क्रियते तत्सर्वं तत्सुखार्थमेवेति भावना निराधारा । भवदीयमार्जवं मन्मनः प्रीणयति । यावच्छक्यमहमपि सरलतां पालयामि । परमस्मादृशानां बहवो व्यया अनिवार्या भवन्तीति । एवं मदसमाधानका-रणमेव स न्यवर्तयत् । परमन्यतयापनेतुं नाशक्नोत् ॥

अथाहमपृच्छम्—

"ननु विहारार्थमपि भवतो न गच्छन्ति । एवं स्थिते भवतामस्वास्थ्यप्राप्ता विश्रामार्थम् देशान्तरेष्वप्राप्ता भवता व्यायामार्थमप्यवकाशः किं दुर्लभ इति ॥"

विहाय त्वत्क्षणोऽहं किं भवता कदापि दृष्ट इत्युत्तरमागतम् ॥

गोखलेमहाशयं प्रति ममादरो गौरवं च तथाभूते यथास्य प्रत्युत्तरं मया न दीयते स्म। उपरिनिर्दिष्टेन तस्य वाक्येन यद्यपि न मे मनः समाधीयत तथाप्यहं तूष्णीमभवम्। कार्यबाहुल्ये सत्यपि यथा वयं भोक्तुमवकाशं लभामहे तथैव व्यायन्तुमप्यवकाशोऽस्माभिरन्वेषणीय इत्यहममंसि। अधुनापि तथा मन्ये। एतेन हि कार्यशक्तिरभिवर्धते। न पुनरपक्षीयत इति ममाशयः ॥

षडशोऽध्यायः

# गोखलेमहाशयेन सहैकमासः (२)

गोखलेगृहमधिवसता मया सर्वोऽपि कालो गृहान्तरेव न यापितः। प्रतिज्ञानपूर्वं हि मया दक्षिणाफ्रिकानिवासिभ्यः क्रैस्तमतेभ्यो यदहं हिन्दुस्थानवर्तिभिः क्रिस्तमतावलम्बिभिर्मिलित्वा तत्तदीयस्थितिगतीः परिचेष्यामीति। श्रुतपूर्वं च मया कालीचरणबॅनरजीमहोदयस्य नाम। स मे परं गौरवास्पदमासीत्। स किल महासभाया मुख्यपात्रं वहति स्म। सामान्यतो हिन्दुस्थानवर्तिनः क्रैस्तमतीया महासभामप्रविशन्तो हिन्दुमुसल्मानजनान् दूरीकुर्वन्ति स्म। तस्मादमीषु यथा मे भयमशयास्तथा श्रीकालीचरणमहाशयेनासीत्। तमेनं द्रष्टुमिच्छामीति गोखलेमहाशयमवेदयम्। स चाकथयत्—' तदुपसर्पणेन किमिव हि प्रयोजनम्'। नूनमसौ साधुजनः। तथापि त्वामयं न परितोषयेदिति मन्ये। तमहं सम्यग्जाने। असौ सर्वथा द्रष्टव्य एव चेद्वरं दृश्यतामिति ॥

बॅनरजीमहाशयस्य दर्शनार्थं विज्ञाप्तिर्मया प्रेषिता। सद्य एव तेनापि तत्प्रतिपन्नम्। तत्पार्श्वमुपगते मयि तद्भार्या मुमुर्षुः शयिनेत्यवेदिषम्। तस्य मन्दिरं निराडम्बरमासीत्। महासभाया च यत्कवचप्रपदीनधारी दृष्टस्तमेवाद्य गृहे वङ्गीयवसनाङ्गीकारं साक्षात्कृत्य प्रमुदितोऽभवम्। यद्यपि तदानीमहं पारसीकवचप्रपदीनधारी तथापि तदीयं सरलजीवनं मे नितान्तमरोचत। क्रमप्युपोद्घातमन्तरेणैव मम क्लेशानवर्णयम्। स मामपृच्छत्—दुरितमारभ्य एव वयं जन्म गृह्णीम इति भवद्भिः किं श्रद्धीयते। अहं श्रद्धध इत्यवोचम्। अथ सोऽब्रवीत्। एवं तर्हि तस्यास्य मूलपापस्य निवृत्तिर्हिन्दुधर्मे न दृश्यते। क्रैस्तधर्मे तु तन्निवृत्तिमार्गो दर्शितः। पापस्य प्रायश्चित्तं मरणम्। तथाहि याज्ञवल्क्यवचनम्—क्रिस्तप्रपत्तिरेकैव मुक्तेर्मार्ग इति ॥

श्रीभगवद्गीतासु प्रतिपादितं भक्तिमार्गमहं न्यरूपयम् । परमिदं निष्प्रयोजनमासीत् । तस्य सौजन्याय तमहमवन्दिषि । यद्यपि सर्वात्मनाहं न परितुष्टस्तथापि तद्दर्शनान्मम लाभ एवासीत् ॥

आमासान्तमहं कल्कत्तानगरे वीथ्यां वीथ्यामचारिषम् । संचारो भूयसा पादचारेणैव निरवर्त्यत । एतत्कालमेव जस्टिसमित्रमहाशयस्य सद्गुरुदासबॅनरजीमहाशयस्य च दर्शनं मयाकारि । दक्षिणाफ्रिकादेशकार्यस्य कृते तयोः साहाय्यकं ममावश्यकमासीत् । अस्मिन्नेव समये सरप्यारीमोहनमुकरजीमहाशयं चाहमदर्शम् ॥

कालीचरणबॅनरजीमहाशयः कालिकादेवालयमधिकृत्य पुरा कथालापमकार्षीत् । तद्देवालयदिदृक्षा मम तीव्राभवत् । तद्विषयको वृत्तान्तः पुस्तकेषु मया पठितपूर्व आसीत् । तस्मादहमेकदा तत्रागमम् । न्यायमूर्तिमित्रमहाशयस्य मन्दिरं तस्यामेव वीथिकायामवर्तत । अतोऽहं तद्दर्शनदिवस एव कालिकादेवालयमुपागच्छम् । कालिकाया उपहारीकर्तुं वृन्दशो नीयमानानवीनवालोकयम् । देवस्थानवीथ्यां वनीपकव्यूहः पङ्क्तिं बद्ध्वा व्यतिष्ठत । तत्र धार्मिकभिक्षुका विरागिजनप्रभृतयोऽप्यविचन्त । तदा हृष्टपुष्टानां याचकानां भिक्षाप्रदानं सर्वथा दोष एवेति तदानीमप्यहममंसि । एषामेकः संघातो मामन्वागच्छत् । तन्मध्यादेकः प्रधानभिक्षुस्तत्रोपविष्टो दृष्टः । अये वत्स क गन्तासीति स मामपृच्छत् । अहमुत्तरमदाम् । सहचरद्वितीयं मामसावुपविश्यतामित्यगादीत् । वयं तथैवाकुर्महि ॥

अस्याविकवृंदस्योपहारीकरणं किं धर्म्यं मन्यन्ते भवन्तः इत्यहमप्राक्षम् । प्राणिना हिंसनं धर्म इति को वा मन्यत इति । स प्रत्यवोचत् ।

" यदि तावदधर्मोऽयमिति कस्माद्भवद्भिर्लोका न बोध्यन्ते ।

" तदेतदस्मत्कार्यं न भवति । भगवद्भजनं खलु नः कार्यम् । "

" भगवद्भजनाय स्थानमन्यत्किं न विद्यते । "

" अस्माकं सर्वेऽपि प्रदेशाः समानाः । लोकास्तावदविवृन्दसदृशाः यत्र महद्भिः कृष्यन्ते तत्र ते प्रसर्पन्ति । न खलु तत्कार्यमस्माकं साधूनाम् ॥

अस्याथर्चाया विरम्य देवस्थानमव्रजाम । अस्मत्पुरस्ताच्छोणितनिर्झरः प्रवहति स्म । नाहं तत्र स्थातुमशक्नवम् । क्षुभ्यमानचेतसो मम चित्तभ्रांतिरजनि । तद्दर्शनमिदं नाद्यापि विस्मृतम् ॥

सायं तस्मिन्नेवदिने कतिपयबंगमित्रैः सह भोजनायाहं निमन्त्रितः । तत्राहमेकेन सख्या नृशंसमिदं पूजाविधानमधिकृत्याभाषिषम् । स चाचकथत् । तत्र निरु भेर्यः प्रहण्यन्ते । ध्वन्यमानेषु तेषु न हि वेदनामयः शोणित इति ॥

मठो मदीयमानसमप्रीणयत् । स्वामिनामसरस्वत्या तद्दर्शनस्य दुर्लभत्व तत्पाश्र्मेषा स्वरीय कलकत्तामन्दिरे चावस्थानमाकर्ण्य मम दु खमाशाभङ्गश्च जायेताम् ॥

तदनु श्रीमत्या भगिनीनिवेदिताया मन्दिरमन्विष्य ता चोरवीथ्या क्वचिदिस्थभवने साक्षादकरवम् ॥ समन्तात्तदीयवैभवमालोक्य मम विस्मयोऽभूत् । आवयो कथालापेभूभय-सामान्यो भाग स्वल्प एवासीत् । वृत्तैतत्प्रस्ताव गोखलेमहाशयो मामवादीत् यदस्याश्चत प्रकृतेस्तव च सामान्यत्वाभावो नाम न मे विस्मयावह इति ॥

तामह पुन श्रीपेस्तनजी-पादशाहस्य भवनेऽपश्यम् । यावत् सा पादशाहस्य वर्षी यस्या जनन्या सहालपितुमुद्यता तावदह तत्रोपस्थित । ततोऽहमनयोर्द्विभाविन्यमशिश्रियम् । यद्यपि तदभिप्राया मम नानुमोदनीया आसस्तथापि ता हिन्दुधर्मे प्रेमवृष्टिमापातयन्तीमवश सन्नस्तौषम् ॥

प्रतिदिनमह दक्षिणाफ्रिकादेशव्यतिकरमुद्दिश्य कलकत्तानगरस्य प्रमुखान् दर्श दर्श तत्रत्या धार्मिकसार्वजनिकसस्था परीक्ष्य तद्वृत्तान्तान् ज्ञाय ज्ञाय कालमत्यवाहयम् । एकदा डा मालिकमहाशयस्याध्यक्षतायामह हिन्दुस्थानीयशुश्रूषादलेन बोअरयुद्धे कृता सेवामधिकृत्य व्याख्यानमेकमदाम् । अस्मिन्नवसरेऽपि मम 'इग्लिशमैन' पत्रिकया सह भूतपूर्व परिचय साहाय्यमकरोत् । सॉण्डर्समहाशयश्च रुग्णशयितोऽपि पण्णवत्युत्तराष्टशताधिकैकसहस्रतमे वत्सरे तेन यावत्साहाय्यमकारि तावत्साहाय्यमद्याप्यकरोत् । गोखलेमहाशयस्तमेन मदीयमुपन्यासम श्लाघत । डा रायमहाशयेन च स्तूयमानमाकर्ण्य नितान्तममोदत ॥

इत्थ गोखलेभवनवासो मम कलकत्तानगरे निर्वर्तनीय कार्यं नितरा सुगममकार्षीत् । वङ्गप्रमुखाना कुलै परिचयसपादनायावकाशमदात् । वङ्गदेशेन सह मदीयनिकटसबन्धप्ररोहस्य बीजमवाप्सीत् ॥

स्मरणीयस्यास्य मासस्य बहूय स्मृतयोऽत्र परित्यक्तव्या । अथाहमिदानीं त्वरयालेर्मम ब्रह्मदेशगमन तत्र पुगीसञ्ज्ञकाना भिक्षूणा दर्शन चोपवर्णयिष्यामि । तेषामलसत्वमालोकयन्नहमदूये । तत्र मया सुवर्णदेवालयो दृष्ट । तत्र प्रज्वलत सख्यातिगान्दीपान्विलोक्य न मे सतोप समजनि । गर्भागारे चक्रम्यमाणान्मूषकान्विलोकमानस्य मोरवीक्षेत्रे दयानन्दस्वामिनामनुभवो मे स्मृतिमागत । ब्रह्मदेशे स्त्रीणा स्वातन्त्र्यम चटुलता च मा मुग्धमकुरुताम् । जनानामल समार पश्यतो मे खेद समजनि । अल्पकालमपि तत्रावतस्थुषा मयेद प्रत्यक्षीकृत यथथा हिन्दुस्थान मोहमयी ( मुबई ) नगर नानुकरोति तथा ब्रह्मदेशोऽपि रगूननगरीमिति । यथा च हिन्दुस्थाने वयमाग्लेयवणिग्भिर्मध्यस्था कृतास्तथा ब्रह्मदेशे साङ्ग्लैरस्माभिर्व्रीहीया मध्यस्था कृता इति ॥

वङ्गदेशात्प्रतिनिवृत्तोऽहं गोखलेमहाशयस्यानुज्ञां प्राप्य ततो निरगच्छम्। तेन वियोगो दुःसहोऽभवत्। तत्रापि नगेषु (अथवा कलकत्तानगरे) मदीयकार्यस्याभिन्नत्वात्तत्र पुनरवस्थानं निर्हेतुकमासीत्॥

क्वचिदेकत्र स्थितिकरणात् पूर्वं हिन्दुस्थानस्य लोहपथसञ्चारिणीषु धूमशकटीषु तृतीयश्रेण्या प्रयाणमङ्गीकृत्य तच्छ्रेणीगतानां पथिकानां क्लेशा अवगन्तव्या इत्यालोचयम्। तथा च गोखलेमहाशये तत्प्रस्तावमकरवम्। स तावन्मामुपाहसत्। अथ मदीयमुद्देश्यं मया सविस्तरमुपवर्णितमाकर्ण्य सप्रमोदमन्वमोदत। अहमाद्य काशीं गत्वा तत्र रुग्णशायिनीं श्रीमतीं बेसण्टमहाशयां दृष्ट्वा कृतप्रणामः परापतिष्यामीति निरचैषम्॥

तृतीयश्रेण्या प्रयियासुना मया प्रत्यग्रमेव परिकरः सज्जीकरणीय आसीत्। गोखलेमहाशयो मोदकपूरिकाभिः सम्भृतामेकां लघ्वीं पक्वाहारमञ्जूषां मह्यमदात्। अहं द्वादशाणकमूल्यमेकं काष्ठकोशमेकमनयम्। छायोर्णामयीं (छायेति पोरबन्दरस्थानगतमौर्णवासोऽभिप्रसिद्धं स्यात्)मेकामायतनिकामकारयम्। एकाङ्गिका, एकमुत्तरीयं, एकं चतुष्कावरं, एकं आन्तरकञ्चुकं इत्येभिर्वस्तुभिः कोशो भरणीय आसीत्। एका जलस्थाली, प्रावरणाय कम्बलमेकं, मल्लिकटं एवास्ताम्। एवं परिकरं सज्जीकृत्य प्रस्थानोन्मुखोऽभवम्। गोखलेमहाशयो डॉ. रॉयमहाशयश्च मामाप्रष्टुमयोध्यानिकेतनमागमताम्। आगमपरिश्रमो भवद्भिर्न वोढव्य इत्यावेदितावपि तौ साभिनिवेशमागतावेव। किं च गोखलेमहाशयः प्राह स्म। भवद्भिः प्रथमश्रेण्या यदि प्रयाणमकरिष्यत तदा नैवाहमत्रागमिष्यामीति॥

निकेतनं प्रविशन्तं तं गोखलेमहाशयं न कोऽपि न्यरुणत्। स किल तदानीं काशेयोष्णीषं कञ्चुकमुत्तरीयं चापोपयत्। डॉ. रॉयमहाशयस्तु वङ्गीयनेपथ्यधारी स्थितः। तमेनं प्रयाणानुज्ञापनपत्रपरीक्षकोऽधिकारी न्यरुधत्। किं त्वयं मे मित्रमिति गोखलेमहाशयेन बोधितस्तं निरमुञ्चत्॥

## विंशोऽध्यायः

## काश्याम्

एतत्प्रयाणं कलकत्तानगराद्राजकोटं यावद्वर्णनीयमासीत्। आग्रा काशी-जयपुर पालनपुर इत्येतेषु स्थाय स्थाय राजकोटं निर्गमिषुरासम्। इतोऽपि भूयांसि स्थलानि वीक्षितुं मम नावकाशोऽविद्यत। एतेषु स्थलेष्वेकैकं दिनमहमनैषम्। अन्ते पालनपुरादन्यत्र सामान्ययात्रिक-

परीक्षणं विहाय एतावताहं मनुष्यामि यावता दृष्टं स्मो यद्भगवद्गीयान्वेषकत्य साक्षादेव पश्यत आहारे नियमं प्रमाणे गुणे चालोचनाभावयोरेव मुख्य ॥

यत्र मदुक्तिरेव स्खलिता वर्तते तत्र विषयो नैव निवेदनीयः । किन्तु तदनुयोगो न कर्तव्य इति विशिष्य सद्भावेन कर्तव्यम् । मदीयोक्तित्वात् यद्दुग्धपानं परित्यक्तं तस्योपयोगो न कर्तव्य स्तदुपयोगो दृश्यते अथवानुभवशालिना वचसा बुद्धिवादस्तथाविधः स्यात् । एतावत्पर्यन्तं ममानुभवे येषां दुर्बलो जीर्णकोशो ये च शयनपतितास्तेषां दुग्धमन्तरेण पुष्टिकरस्त्वाहारो न विद्यते ॥

यदि कश्चिदेतमध्यायं पठित्वा स्वानुभवेन न तु पठनेन शाकाहारस्य पुष्टिकरं जीर्णकारि च दुग्धस्थाने प्रतिनिधिं मे सूचयेत्तदाहं तस्य बहूपकृतं स्यामिति ॥

नवमोऽध्यायः

## अधिकारिभिः कलहः

**अथैशियासंस्थोपरि** दृष्टिं निक्षिपाम ॥

जोहानिसबर्गपत्तनमेशियाधिकारिणां वडीयं स्थानमासीत् । एते अधिकारिणो भारतीयचीन-देशीयादीनामार्थं संरक्षन्त्विति नियुक्ता आसन् । प्रतिदिनं मत्पार्श्वमागच्छन्ति स्म नियुक्तानां वचनानि एतादृशि । येषामस्याधिकारस्तेन प्रवेक्ष्यन्ते । येषां तादृशाम्नि तेभ्य एककशः 'पौंड'-स्वीकृत्य रहसि प्रवेक्ष्यन्ते। यदि भवान् नास्मादृक् न विचारयेत्तदन्य को न करोतीति। अहमपि तन्मना अभवम्। यद्यहमेतदनिष्टं न विनाशयेयं तर्हि ट्रान्सवालदेशे मम वर्तनं व्यर्थमेव स्यात् ॥

ततोऽहं साक्ष्यं संग्रहीतुमुपक्रम्य कालेऽस्मिन् पर्याप्तसाक्ष्ये 'पोलीसकमिश्नर' अधि-कारिणं द्रष्टुमगाम्। असौ पारमार्थिकः पुरुष इवादृश्यत । मां दाक्षिण्येन दृष्ट्वा सर्वमशृणोत् । भवता साक्ष्यसंग्रहः प्रदर्शयेति पृष्टः यावदासीन्मत्समीपे तावद्दत्तवान्। साक्षिणः स्वयमेव परीक्ष्य तुष्ट आसीत् । किन्तु दक्षिणाफ्रिकादेशे सवर्णानानामसवर्णानामभियोगेषु गौरापराधिनं गौर-गणपञ्चायितस्य पुरस्तात् दण्डयितुं दुष्करमिति यथा मया तथा तेनापि ज्ञातम्। तथापि प्रतिमाति यत्पञ्चायितनास्तान्विमोचयिष्यन्तीति भियापराधिनो मोचयितुम् । तान्ग्राहयितुं प्रयतिष्य एव ॥

तादृशी स्थितिर्नास्मस्यासीत् । बहूनामधिकारिणामुपरि सन्देहो मम नासीत् । किन्तु तेषां सर्वेषामुपरि प्रामाणिकं साक्ष्यं नासीत् । अतो ययोरपराधे प्रति न मे सन्देहलेशोऽप्या-सीत्तयोर्द्वयोरेव ग्रहणाय ग्रहणाज्ञापत्राणि प्रेषितानि ॥

ममेतरतत परिक्रमो रहोऽज्ञातनिक्षेतु न शक्य आसीत्। वहयोऽज्ञासिषुर्यत्प्रयह 'पोलीसकमिशनर'स्य पार्श्वं गच्छामीति। गृहीतौ द्वावधिकारिणौ गृढान्वेषको समक्षाया यास्ताम्। इमे मदीयकार्यालय सचर्य स्वाधिकारिणा मम चलनानि निवेदयन। एतावधि कारिणौ तथा दुष्टाशस्ता यथानयोर्गूढान्वेषका बहवो न मिलन्ति स्म। यदि भारतीय चीनदेशीयजना मम साहाय्य नाकरिष्यन् तदा तयोरसेवो न शक्योऽभविष्यत्। अनयोरेव पलायित। देशान्तराद्गृहीत्वानयनाय ग्रहणाज्ञा दत्वा शृन्सघाल्प्रदेश प्रापित। न्यायस्थाने विचारणाया स्वप्रतिकूलसाक्ष्य यद्यपि बहूलमासीदपि च यद्यपि पचायितनन पलायितसैरस्य साक्ष्य प्राप्तवान् तथाप्युभावपि निर्दोषिणाविति विमुक्तावभूताम्॥

अह तावन्निराश सवृत्त। 'पोलीसकमिशनर' अपि विषण्णोऽभूत्। न्यायस्थानकार्येषु जुगुप्सा समजनि। बुद्धिरेव विषादकरी यदेषापराध निगृहितु साधन जाता॥

अनयोरुभयोरधिकारिणोरपराध सार्वजनीन आसीत। यद्यपि न्यायस्थाने विमोचितौ तथापि 'गवर्नमेंट' एवैतयोराश्रय न ददौ। उभावप्युद्योगान्निवर्तितौ। 'एशियाटिक' सस्था च परिशुद्धप्राया भूत्वा भारतीयसमाजो मनसि दृढीकृत आसीत्॥

एतत्कार्यं मम गौरवमवर्धयत्। न्यायस्थानकार्याणि बहून्यभवन्। प्रतिमास व्ययीक्रियमाण शतानि। 'पौंड'द्रव्यस्य रक्षितान्यासन्। आमनश्चौर्यात्। सर्व न रक्षितु साध्यमासीत्। यतोऽसत्यवर्तिन स्वव्यापारमद्यापि कुर्वन्ति स्म। किंतु सत्यवर्तिनो जनस्य सत्य रक्षितु शक्यमासीत्॥

इद तावद्वक्तव्य यदेतावधिकारिणौ दुष्टावपि तयोरुपरि मे न किंचिदासीत् स्वत। इद तयोरपि विदितमासीत्। सकटपतितौ मत्समीपमागतौ च। अह च साह्यमकरवम्। जोहानिसबर्ग 'म्युनिसिपालिटि'सस्थायामुद्योग लब्धुमवकाशोऽभिवत। यद्यह तयोर्न प्रतिकूल। अस्मिन्सदर्भे तयो सुहृदेको मा दृष्टुमागत,। नाह प्रतिकूलो भविष्यामीत्यवोचम्। तौ विजय प्रापतु॥

येषामुद्योगिना सपर्कों मे जातस्तै सह मदीयवृत्ति सुखकरी बभूव। अपि च यद्यपि वार वार तत्सस्थाविषये परपोलिप्रयोग कृत्वा यत्साहायितुमुक्तस्तथापि मया सह सौहार्देनावर्तन्त। सोऽह मम स्वाभाविकोऽश इति तदा मे न ज्ञातम्। स्वय सत्याग्रहस्यावश्यको भाग। अहिंसायाश्च स्वरूपमिति पश्चाद्वेदिषम्॥

पुरुषस्तत्कृत्य च भिन्नवस्तुनी। सत्कार्य समतिमसत्कार्यमवमर्ति च भजति। कार्यकर्ता नु साधुर्वा दुष्टो वा सवदा मर्यादा धारण्य वा यथार्हत प्राप्नोति। पापे द्वेषो न पुन पापकारिणि। इय लोकोक्ति सुगमा विज्ञातुम्। तदभ्यासस्तु विरल। अत एव द्वेषस्य विष प्रसर्पं प्रसर्पति॥

इयमहिंसा सत्यान्वेषणस्याधारः । इदानीमहं प्रतिदिनं जानामि सत्यान्वेषणं व्यर्थमहिंसाधारं विना । जगदभियोक्तुं प्रतिनिरोद्धुं च युक्तं तस्यैव कर्तारं चेत्तर्हि तदा मानमेव प्रतिनिरुन्द्धेऽभियुङ्क्ते च ॥

एतस्यापराधे इतरस्यापि वर्तते । वयं सर्वेऽपि एकस्यैव स्रष्टुरपत्यानि । दिव्यशक्तयोऽस्मदन्तरनन्ताः । मानवप्राणिनः एकस्यापि तिरस्कारस्तासां शक्तीनामेव तिरस्कारः । न केवलं प्रहृतः स प्राणी किन्तु सर्वमपि जगतीम् ॥

## दशमोऽध्यायः

# पवित्रस्मृतिः प्रायश्चित्तं च

**मम** जीवितेऽनेकविधा व्यवहारा बहुधर्मावलम्बिनां नैकजातीयानां च पुरुषैः समीचीनपरिचय-कार्षीत् । तेषां परिचयेन दृष्टं वक्तुमिदं शक्यं यदधुना दूरस्थानां च मध्ये देशीयानां विदेशीयानां च गौराङ्गाणां सवर्णानां च हिन्दूनां भारतीयजनानामितरमतस्थानां च 'मुसल्मानपारसीक्रिश्चियन' अथवा 'ज्यू'जनोऽस्त्वेतेषां मध्ये च न भेदं पश्यामि । तादृग्भेदप्रत्ययो मे मनसि न जायते । अयमेको गुणविशेष इत्यपि न वक्तुं युज्यते । तदेतन्मम स्वभावे निरूढं न पुनर्मम प्रयत्नकृतं फलम् । परन्त्वहिंसाब्रह्मचर्यापरिग्रहेषु तेषामभ्यासं कर्तुं प्रयतमानोऽस्मीति सम्पूर्णज्ञानं मे वर्तते ॥

डरबनपत्तने न्यायस्थानकार्याणि यदाहमकार्षं तदा मम कार्यालयस्य लेखका मया सह बहुशः स्थिताः । तेषां मध्ये 'हिन्दुक्रिश्चियन'जनाश्चासन् देशतो वर्गतो गुजरातीयास्तामिळजनाश्च-तानहं बन्धुमित्राणीव गणयन्नासमन्यथा तान्न जानामि । ते सर्वे मम कुटुम्बस्य जना इति सर्वदा मे गणना । भार्या मे मार्गे निरुध्य स्थिता चेत् समीचीनमासीत् । लेखकानामेकः 'क्रिश्चियना'सीत् । स च पञ्चमदम्पत्योः पुत्रः ॥

गृहं पाश्चात्यरीत्या निर्मितमासीत् । प्रकोष्ठेभ्योऽशुद्धजलं निष्कासयितुं नाभूदवकाशः । प्रतिप्रकोष्ठं मूत्रपात्राण्यासन् । भृत्यादिभिः कार्यकरणापेक्षया भार्या वाहं वा स्वयमकार्ष्म । स्वमन्दिर इव वसन्तो लेखकाः स्वपात्राण्यशोधयन् । किन्तु 'क्रिश्चियन' लेखको नूतनागतः । तस्मै शयनागारमालोकयितुमस्माकं कर्तव्यमासीत् । भार्यान्येषां पात्राणि निरवाहयत् । पञ्चमस्य पात्राणि स्वच्छीकर्तुं तस्याः सहनशक्तिर्निरन्तमासीत् । अतो द्वयोर्नौ कलहः प्राप्तः । सा पात्राणि शोधयन्ती द्रष्टुं सोढुं न शक्ता भार्या स्वयं वा कर्तुं नारोचयत् । स्मरामि तदद्यापि यथा सा निर्दयं क्रोधेन रक्तनयना कपोलयोरुपरि अश्रुबिन्दून् पातयन्ती पात्रहस्ता निःश्रेणिकामवरोहन्ती दृश्यते स्मेति । परन्त्वहं कृपया मृदुः पतिर्मया सा शिक्षणीयेति मत्वान्धप्रेम्णा तामखेदयम् ॥

केवल पात्रभवदिति न मे तृप्तिरासीत् । प्रीया यार्यं वरणीयमिति मे मति । अतोऽहमाचगुचै शब्द कृत्वा मम गृहे एतादृशा मन्द्बुद्धिता नाह सहिष्य इति ॥

वाक्यमिद ता बाणवद्विव्यत् । सा पुनरवदत् । तव गृह तवैव स्थापयाह गच्छेयमिति । अहमामान व्यरमम् । प्रेमरस शुष्कोऽभूत् । हस्ते ता वरानीं गृहीत्वा निश्रेणिसमीपवर्ति वहिर्द्वारमुद्घाटयितुमिच्छन् ता च वहिर्निष्कासयितुमाकृष्य पुरो गत । नेत्राश्रुप्रवाहस्तस्या कपोल्योरुपरिष्टाद्धावति स्म । अपि च सा चवद यद्यपि ते लज्जालेशोऽपि न विद्यते । तथापि तावद्धर् किं विस्मरणीय । भगवानहो वर्तताम् । वहिर्द्वारस्य यत्न कुरु । मा तावदितरेऽस्मच्चे ष्टितानि जानीयुरिति ॥

अह धीरमुख स्थित । परन्तु लज्जित एव भूत्वा द्वारनयनमकार्षम् । भार्या मा यदि त्यक्तु न शक्ता तर्ह्यह च न त्यजेयम् । आवयोर्मध्ये दुश्चेष्टा सन्ति नि सख्या परन्तु पर्यन्ते शान्तिरावयो स्थिता । भार्या तावद्द्वितीयसहनशक्ति सर्वदा जयशालिनी भवति ॥

अथाहमसक्त एव प्रस्तुतमभिधातु शक्नोमि । कालोऽयमन्य । अस्माद्बहिरागतोऽह स्थित । नाहमद्याप्यन्धो मत्त पति । नाहमत्र भार्यया अपि शिक्षक । 'कस्तूरबा' यदि सा तथा इच्छेत्तर्हि मय्यसम्यावर्तिनी स्यादथवा तस्यामह पूर्वमासम् । आवा परीक्षितौ सुहृदौ परस्परकामोपभो गायेति न मन्यामहे । रोगातप्रतिकालेषु प्रतिफलमनपेक्ष्य सपोषिकाभवत् ॥

प्रस्तुतो विषयोऽष्टनवयुत्तराष्टादशसहस्राधिकमिते (१८९८) वत्सरे समभवत् । तदा हि मे ब्रह्मचर्यप्रत्ययो नासीत् । तदा हि ममालोचनाया भार्यापत्यु काममाजनमित्यासीत् । पत्युराज्ञाकारिणी न पुनस्तस्य साहाय्यकारिणी सखीव तस्य हर्षदु खेषु भागिनीति स्थितम् ।

एकोनविंशे सहस्रमिते वर्षे इमा भावना परिवर्तन जग्मु । षड्वुत्तरैकोनसहस्रमितवर्षे (१९०६) ता राशिरूप मेत्रु । किन्तु तद्विषये तस्योचितस्थाने वक्ष्यामि । एतावद्वक्तु पर्याप्त यत्कामावेश क्रमशोऽदर्शनगमात् । तावन्मम गृहस्थजीवन शान्त मधुर सुखकर च दिने दिनेऽधिकाधिक भवति ॥

पतिव्रतस्मृते कथया न कोऽप्येव निश्चिनुयाद्यथावा प्रामाणिकदम्पती स्म । अथवावयोर्मध्ये विषयाणा सम्पूर्ण समभावोऽस्तीति । 'कस्तूरबा'एव प्रायशो जानाति मत्तो भिन्ना विषया स्वस्य सन्ति वा न वेति । अद्यापि मया क्रियमाणाना समतिर्नास्तीति प्रायो दृश्यते । आवा तद्विषये चर्चा न कुर्म । चर्चाया च न विद्यते शुभम् । न पितृभ्या न च मया सा युक्तवेलाया विद्याभ्यास कारिता । किन्तु महानेको गुणोऽस्या हि दुर्मार्गोजनस्यापि किंचिद्वर्तते बहुधा तस्या । तदेतद्यथा मन पूर्वक वा न वा जानती वा न वा प्रयतमानानियममार्गे न कदापि प्रतिकूल स्थिता । मम पादपमानेवानुसरन्ती च स्थिता । यद्यप्यावयोर्बुद्धिविशेषे महान्व्यत्यासो भवेत्तथापि सदेय मे भावना यदावयोर्जीवने भवस्तृप्ति सुखमभ्युदयश्च विधत्त इति ॥

# 'ऐरोप्यैः' सह गाढः परिचयः

**अनेनाध्यायेनानीतोऽस्मि** येनेदं वाचकाय वक्तुमावश्यकं भवति यथेयं कथा सप्ताहं सप्ताहं लिख्यते ॥

यदाहं तां लेखितुमारब्धवान् तदा लेखनमार्गो न निश्चितः । दैनंदिनपुस्तकलेखनं पुस्तकं वेतरपत्राणि वा मम कथालेखनस्याधारो न निश्चितः । लेखनकाले यथा भगवान् प्रेरयेत्तथा लिखामि । ममासचिंतनानि कार्याणि च भगवता प्रेरितानि भवन्तीति मन्ये । परन्तु मम जीवनकाले मया बहुधा कृतेषु परीक्ष्यमाणेषु तथा स्वल्पास्वपि क्रियासु परीक्ष्यमाणासु सर्वाण्यपि भगवतैव प्रेरितानीति वक्तुं नानुचितं भवेत् ॥

मयासौ न प्रत्यक्षीकृतः न चाहं तं जानामि । या भगवति जगतो भक्तिः सैव मया स्वकीया कृता । सा चारोपयितुं न शक्येत्यस्मान्मयानुभवोऽयमिति मन्ये । मम भक्तिरेवानुभव इति वचनं स्वयमनर्थं करोतीति चेद् भगवति भक्तिं निरूपयितुं शब्द एव नास्तीति वक्तव्यम् ॥

ज्ञातुमिदानीं सुलभं यथा भगवत्प्रेरणयैव कथां लेखिष्यामीति । यदाहं गताध्यायमलेखिषं तदास्याध्यायस्य शिरोवर्णनमेव प्रादाम् । किन्तु लेखनं सर्वतो ममास्फुरद्यथा 'युरोपीय'जनैः सह ममानुभवस्तस्य पीठिकां किंचिल्लेखितुमुचितमिति । अत एव तस्य परिवर्तनेन शिरोवचनमन्यथाकृतम् ॥

एतमध्यायमारभमाणस्य नव्यो विषयोऽस्मिन् । आत्मशुद्ध्या विषयकलेखने किं वक्तव्यं किं मोक्तव्यमितीव चिन्तनीयम् । सम्बद्धा विषया यदि परित्यज्यन्ते तर्हि सत्यं मन्दीभवति । अस्याः कथाया लेखने सम्बद्धतां प्रति यदा मे न दृढः प्रत्ययस्तदा सम्बद्धताया प्रस्तुतत्वेऽपि निश्चेतुं दुष्करम् ॥

चिरात्पूर्वं मया यत्पठितमात्मकथायाश्चरित्रादप्यपर्याप्तता तदिदानीं स्पष्टं विजानामि । यावदहं स्मरामि तत्सर्वमस्यां कथायां न लिखामि । सत्यं चिंतयता मया कियत्प्रदेयं वियोक्तव्यमिति वक्तुं दुष्करम् । मम जीवने परोक्षवृत्तानां कतिचिद्विषयाणामपूर्णमनभिव्यक्तस्य न्यायस्थाने किं मूल्यं स्यात् । लिखितपूर्वाण्यध्यायनानि विहृत्य परकीयकृत्यविचारकः कोऽपि यदि मां परीक्षेत तदा बहुशः प्रकाशनायानि ॥

यदि मे विरोधी कश्चित् क्लिष्टप्रश्नैः परीक्षेत तदा मम बहुप्रकाशितां मायां प्रकटयन् स्तुतिनाशनं प्रदर्शयेत् ॥

अतोऽहमात्मकथां विचिन्तयामि । एतामध्यायानां लेखनमेव कुतो न स्थगयेयम् ।

किंवाभ्यन्तरनादेन निषेधो यावन्न स्यात् तावल्लेखनं चलतु । यावन्न स्यान्नीतिनिरुद्धा तावन्न परित्यजेदिति कल्याणी लोकोक्तिरनुसरणीया ॥

परकीयकृत्यशिल्पिनं सन्तोषयितुमहमात्मकथां न लिखामि । तल्लेखनमेव सत्येनानुभव । मम सहकारिणा किंचिदानुकूल्यं स्मरणायाहारं च प्रदातुं निश्चितमेवोद्देशानामेव । तेषाम भिक्षायानुसारेणैवाहं लेखकः प्रवृत्तः । जेरामदास—स्वामीआनदश्च यदि सूचनां न ददतुस्तर्हीयं नैव लिखिताभविष्यत् । आत्मकथालेखने ताभ्यां दोषभागिभ्यां भवितव्यम् ॥

परन्तु शिरोवचनानुसार विषयं प्रही याम । मम कुटुम्बस्य जन इव यथा भारतीयजनो मया सह न्यवसत्तथाप्तसुहृदोऽपि । मया सह निवसद्भ्योऽखिलेभ्यो नेदमरोचत । परन्वेतां निक्षेप्तुं निर्बन्ध आसीत् । नाहं प्रतिविषयं बुद्धिमानासम् । आसन्मे विषया अनुभवाः । परन्त्वेते भारतीयाः 'युरोपियन' चोभये । अननुभवाना नाहं विषीदामि । यद्यप्येवं स्थितेषु यद्यप्यनानुकूल्यं क्लेशश्चोत्पादितं सुहृद्भ्यो मच्चरितमहं नान्यथाकृतवानपि च सुहृदः सोढवन्तो मया । आगन्तुकानां सपर्कों यदि दुःखकरस्ततस्तान्दूषयितुं नैव सशय आसीत् । अन्ये यथा स्वेषु स्वेषु भगवन्तं पश्यन्तोऽन्येष्वपि तथा पश्यन्तं सर्वेषां मध्ये प्रत्येकं निवस्तुमर्हन्ति । अपि चैवं निवस्तुं या शक्तिः साभ्यासनीया । न हि सपर्कनिवारणेनापि तु सेवाधर्मेण स्वयं नैसर्गिहारिता ॥

'बोअर'युद्धं यदाभवत् तदा मम गृहं सपूर्णमासीत् । जोहानिसबर्गप्रदेशादागतौ द्वावौ ग्लौ प्राप्तौ । उभयौ च भागवतौ ( Theosophists ) तयोरेकः किचनमहाशयः । स पुरस्ताद्विज्ञातुमवसरो वर्तते । एतौ सुहृदौ मम भार्याया नयनाश्रुजनकौ । दूरदृष्टवशात्मत्कारणादनेन मवत्यान्यभूताम् । अयमेव प्रथमोऽवसर आप्तसुहृदः कुटुम्बजन इवावसत् । यदाहं 'इंग्लैंडदेशे' न्यवसं तदा तेषु दिवसेषु आप्तगृहेष्वारामं । परं तु तत्र तत्तौनवमार्गानन्वसरम् । घविड्रोजनान्यवास इवासीत् । अत्र तु तदन्यथाभूत् । आप्तसुहृदः कुटुम्बवर्ती जन आसन् । अनेकविषयेषु तौ भारतीयरीतिमाश्रितौ बहुषु विषयेषु । गृहस्य बहिः सूचना पाश्चात्यरीत्यैव । आभ्यन्तरं तु प्रायः सर्वं भारतीयपद्धत्या । कुटुम्बजनमिव तौ निधातुं किंचित्कष्टमासीत् । परन्तु गृहस्यान्तरे सुखेन तौ निवेशयितुं नैव किंचिदपि क्लेश आसीत् । जोहानिसबर्गप्रदेशएते परस्परा परुप्रमरतने भूयाम आसन् ॥

# 'युरोप'जनेन संपर्कः

एकदा जोहानिसबर्गपत्तने चत्वारो भारतीयलेखका मत्पार्श्वे स्थिताः । न ते लेखकाः किन्तु मदीयपुत्रा एव । परन्त्वेते मत्कार्याय न पर्याप्ता आसन् । 'टाईपरायटिंग' विना कार्यं न चलति स्म । एतन्मध्ये तद्विद्यहमेक एव । द्वौ लेखकावहं तदशिक्षयम् । परन्तु तावाङ्गलभाषाज्ञानविहीनतया पर्याप्तशक्तियुक्तौ नाभूताम् । एतेष्वेकमायव्ययज्ञं कर्तुमैच्छम् । नातालप्रदेशान्न कोऽपि मिलति स्म । अनुज्ञापत्रमन्तरा विना ट्रान्सवालप्रदेशं न कोऽपि प्रवेष्टुमर्ह आसीत् । मम स्वतानुकूल्यायानुज्ञाप्रदमधिकारिणं तदनुग्रहाय प्रार्थयितुं न सज्ज आसम् ॥

अहं किंकर्तव्यतामूढः स्थितः । कार्यरोपः समारोहति स्म । एवं कार्यं सार्वजनिकं च कार्यमुभयं च कर्तुमशक्यमिव प्रत्यभात् । मम प्रयत्नबाहुल्येऽपि 'युरोपियन' 'लेखकमे'कं नियोक्तुं नैच्छम् । किन्तु मामिव सवर्णं पुरुषं सेवितुं गौराङ्गो गौराङ्गी वा लब्धुं निश्चयो नासीत् । मम विदितपूर्वस्य 'टाइपरायटर'स्य नियोक्तारमेकं गत्वाहमपृच्छम् । 'स्टेनोग्राफर' मत्पार्श्वमानयेति । कन्या मिलन्ति स्म । तदेकामानेष्यामीति वाग्दानमकरोत् । 'स्कॉटलैण्ड'निवासिनी 'मिस डिक' नाम्नी तेन दृष्टा । सयनीवन कर्तुं नास्त्याक्षेप इति सोक्तवती । तस्याश्चावश्यकतासीत् । तामानीय नियोक्ता मम प्रादात् । तत्क्षणं सा मामन्वरञ्जयत् । अहं तामपृच्छम् — भारतीयपार्श्वे सेवां कर्तुं किमाक्षेपोऽस्ति ? नहीति दृढं प्रत्युत्तरमागतम् ॥

कियद्वेतनं वाञ्छसि ।

सार्धाधिकसप्तदशपौंड नातीवेति मन्यसे ।

मया वाञ्छितं कार्यं करोषि चेन्नातीव । कदा कार्यायागमिष्यसि ।

भवदिच्छायामेतत्क्षणमेव ॥

अहमतीव सन्तुष्टः । तत्क्षणमेव लेखान्वाचयित्वा लिख्यतामित्यवोचम् ॥

अचिरादेव सा न केवलं वर्णमात्रलेखिका ( stenotypist ) परन्तु मम दुहिता भगिनी वा प्रवृत्ता । तस्याः कार्ये स्खलितग्रहणमवकाशं सा प्रादात् । असहस्रस्य सहस्राधिक-पौंडमितद्रव्यस्योपयोगे नियुक्तायव्ययपुस्तकानि च न्यक्षिपत् । सा मम संपूर्णविश्वासपात्रमभूत् । अधिकं च वक्तव्यम् । यदेषा स्वान्तर्गतचिन्ता भावनाश्च मयि विश्वस्य कथयति स्म । पत्युरन्वेषणवादं मामपृच्छत् । विवाहे तस्याः प्रतिपालकगौरवं ममैवासीत् । 'मिस डिक' यदा

मॅकडोनल्डपाणिग्रहणमकरोत्तदा मां पर्यत्यजत्। अथापि विवाहानन्तरं कार्यवशादागता प्रतिवचनमदादेव ॥

किन्त्विदानीं तस्याः स्थानेऽपरा 'स्टेनोटाइपिस्ट' अपेक्ष्यते स्म। अदृष्टवशादन्या च लब्धा। सा च 'मिस श्लेसिन' नाम्नी परिचायिता कॅलनबॅकमहाशयेन। इमं महाशयं वाचकः क्रमेण ज्ञास्यति। सेदानीं ट्रान्सवालप्रदेशस्थकुमारीविद्यालयानामेकस्मिन्नध्यापिकाऽभूत्। यदा सा मत्पार्श्वमागता तदा सप्तदशवर्षदेशीयासीत्। कतिचित्तस्या विलक्षणभावाः कॅलनबॅकमहाशयस्य मम च कदाचिदसह्या आसन्। वर्णसङ्केतलेखिकाकार्यं कर्तुं सा नागता किन्त्वनुभवं लब्धुम्। असितागणारागेति वर्णनं असूया तस्याः स्वभावस्यातिदूरे। तस्या वयो वाऽनुभवो वा न किंचिन्मनस्यासीत्। स कंचिदधिक्षेप्तुं वा यस्य कस्यापि मुखेन एतादृश-स्त्वमिति वक्तुमपि निश्चितवत्यासीत्। तस्या आतुरोऽविवेको मां बहुवारं सङ्कटेऽपातयत्। किन्तु तस्याः शुद्धनिर्दोषस्वभावस्तानि सङ्कटान्युत्पन्नमात्राणि दूरमपास्यत्। तस्याः 'टाइप'कृतपत्राणि पुनरालोकनं विना स्वाक्षरीकृतवानस्मि। यतस्तस्या आङ्ग्लभाषा मदीया निर्दुष्टासीदित्यहममंसि। तस्या भक्तौ मम सम्पूर्णविश्वास आसीत्॥

सा बहुत्यागमन्वभूत्। चिरकालं मासे मासे षट् पौंडमितं द्रव्यं गृह्णाति स्म। प्रतिमासं दशपौंडमिताद्धनादधिकं ग्रहीतुं नेति वक्ति। अधिकं गृहाणेत्युक्ता मामधिक्षिप्य ब्रवीति यथा वेतनार्थमहमत्र न स्थास्यामि। यतोऽहं भवता सह कार्याणि कर्तुं स्थितास्मि। इष्टो मे तवोपदेशः ॥

एकदा सा मत्सकाशाच्चत्वारिंशत्पौंडद्रव्यमृणीकृत्य गृहीतवती। व्यतीते वत्सरे पूर्णं धनं मे प्रादात्। तस्या धैर्यं तदीयत्यागकृते समानमासीत्। इयमेका स्त्री मया दृष्टा यस्याश्चारित्र्यं मुक्ताफलमिव निर्दुष्टं यस्याश्च धैर्यं भयस्यापि त्रपाकारिणम्। इदानीमेव वयस्था युवतिर्मया सह यदा स्थिता तत्काले तन्मनसो वृत्तिर्यथासीत्तथेदानीमपि वर्तते न वेति न जाने। परन्त्वेतया सह परिचयो मे पवित्रा स्मृतिर्भवति। सत्यादहं भ्रष्टो भवेयं यदि जानन्नपि तद्विषयान्निगूहेयम् ॥

अङ्गीकृतपक्षस्य कृते सा रात्रिं दिवं प्रयस्यति। रात्रावन्धकारे कार्यवशाद्गच्छति स्म। सहयायिनमेव नयेति सूचिता क्रोधेन सूचनां निराकरोति। सहस्राधिको बलिष्ठभारतीयजनस्तामेव मार्गदर्शिकामपश्यत्। सत्याग्रहदिवसेषु प्रायः सर्वे नायकाः कारागृहे स्थिताः। तदैकाकिनी सा समूहमचालयत्। लोकानां सहस्राणि तस्या वशे आसन्। पत्रव्यवहारबाहुल्येन तद्वशेऽभूवन्। 'इण्डियन ओपिनियन' समाचारपत्रं तदीयहस्तगतमासीत्। किन्तु सा न कदाप्यायासमभजत ॥

निरतरमहं 'श्लेशन' विषये लिखेयम्। गोखलेमहाशयस्य गणना निरूपयितुमिममध्यायमन्त गमिष्यामि। मम सहकारिणं सर्वान् गोखलेमहाशयो व्यजानात्। तेषां बहुमिश्च सन्तुष्ट। असहृत्तत्कृते स्वाभिप्रायमदात्। सर्वेषां भारतीय'युरोपियन्' जनानां मध्ये श्लेशिनमहाशयाय प्रथमस्थानमदात्। तेन निगेक्त यया इदमस्थयम पवित्रनार्थप्राप्ति कुशलता च मया अन्येषु जनेषु दृश्यन्ते। भवन् सहकारिणां मध्ये 'मिस श्लेशिन' महाशयाग्रस्थानमाश्रयतीति॥

त्रयोदशोऽध्यायः

# 'इंडियन-ओपिनियन'

अन्यैः परिचितैर्युरोपियनजनसम्पर्कं पुरोगमनात्प्राक् द्विना प्रधानविषया निरूपणीया। नपकर्णाणामेतस्तात्क्षणेऽस्मिन्नेव वक्तव्य। 'मिस डिक' महाशयाया नियोगो ममोद्देशस्य पर्याप्ता नासीत्। अधिकसाहाय्यमावश्यकमासीत्। 'रीच' महाशय पूर्वाध्यायेषु वर्णित इति। अहमेन सम्यगवेदिषम्। कस्मिंश्चिद्वाणिज्यस्थाने कार्यकर्त्ताधिकारी आसीत्। तमधिकारिणं परित्यज्य मत्पार्श्वे उद्योगकरणायागन्तु सूचित आगतोऽभूत्। एतेन मम भारोऽनीयल्पतुरुन॥

प्रायेणैतत्काले मदनजितमहाशय आगत्य 'इंडियन ओपिनियन' पत्रिकाप्रचालने ममाशयमपृच्छत्। पूर्वमेव मुद्रायन्त्रमेव चालयति स्म। अहं तस्याभिप्रायमन्वमन्नि। चतुरुत्तरनोनविंशतिमहस्रमिते वत्सरे (१९०४) पत्रिका प्रचलितुमारब्धा। 'मनसुखलाल-नाजर'महाशय प्रथमपत्रिकास्वामी बभूव। परन्तु सत्यकालं पत्रिकास्वाधीनता प्राप्य तस्य भार वोढुमुद्युक्तोऽभवम्। मनसुखलालमहाशयस्तु वोढुमशक्त इति न। यदायं भारतदेशे स्थितस्तदा वृत्तान्तवाहनकार्यं बहुल करोति स्म। किंतु दक्षिणाफ्रिकादेशे यावदहं स्थित तावत्तत्र यत्पूर्वविषयेषु प्रवेष्टुं न धैर्यमकरोत्। मम विवेकदृष्टौ महती यस्य श्रद्धासीत्। अत एव पत्रिकाविषयलेखनेषु प्रतिवासयदायित्व ममोपर्यपतत्। पत्रिकाद्यापि साप्ताहिकी भवति। गुजराती-हिन्दी तामिल-आन्ग्लभाषासु चलति। तामिल हिंदीविभागौ यद्यनामयौ। यदुद्देशेन तावागतौ तदुद्देशनैवापूरयताम्। अत एव तौ विराम प्रापितौ। तयो परिस्थिती यथनोहनासयत॥

पत्रिकाया यत्किंचिदपि प्रयोजनं स्यादिति न मे चिन्तासीत्। परन्तु शीघ्रमेव दृष्टा यन्मम द्रव्यसाहाय्य विना चालयितु न शक्यमिति। अपि च भारतीय 'युरोपियन जनाना विदितमासीद्यद्यपि नाह पत्रिकास्वामी तथापि तस्य सचालन मय्यायत्तमिति। पत्रिका नैर न जात

चतुर्दशोऽध्यायः

# ‘कुली’स्थानानि अथवा ‘घेटो’

अतिमहता लोकसेवामस्माकं कुर्वता कतिचिद्गणा अस्माभिर्हिन्दुजनैरस्पृश्यत्वेन पत्तनस्य ग्रामस्य वा दूरे ‘ढेढवाडो’ इति गुजरातीभाषायामुक्तास्तन्नामधेये च दुर्वासनामयावास तिष्ठन्ति । इत्थमेव ‘क्रिश्चियन युरोप’ प्रदेशे एकदा ‘यहूदी’ जना अस्पृश्या इत्युक्ता ‘घेटो’ इति दुर्नामधेयेनाहूता । तथैव वयमपि दक्षिणाफ्रिकादेशे अस्पृश्याः संभूताः । अैन्ड्रूजमहाशयेन कृतो यत्नोऽपि च शास्त्रे गृहीतं भूतयत्नमस्मान्पुरस्थान प्रापयिष्यन ॥

पुराण‘यहूदी’जन आत्मानमेव भगवतानुगृहीतं मन्यते स्म । इतरान् सर्वानप्यन्यथाभूतान् मेने । अत एव तद्दशाजा सर्वेऽपि न केवलमाश्चर्यवरमपि तन्न्याय्य प्रतीकार मेनिरे । तथैव हिन्दुजना अप्यमानमार्यान्नागरिकान् मन्यन्ते । स्वेषामेवाङ्गभूताञ्जनान् प्राकृतानार्येत्यादिकमानलयन्ति । अत एव ते तस्यान्यायस्य फलमनुचितविचित्रप्रकारेण दक्षिणाफ्रिकादेशे अनुभवन्ति । एवं च समानदेशस्था समानवर्णयुक्ताश्च ‘मुसलमान पारसी’ जना अपि तादृश फलभाजभूता इति मे मतिः ॥

वाचकस्येदानीं विदितं स्यादस्याध्यायस्य शिरोरचने कुलीस्थानानीति प्रोक्तस्य । दक्षिणाफ्रिकादेशेऽस्माकं कुलीति नामधेयम् । भारतदेशे कुलीयस्य द्वारपाले भाटकगृहीत धर्मकर इत्यर्थं स्यात् । अपि तु दक्षिणाफ्रिकादेशे तस्य तिरस्कारणीयो भावो वर्तते । यथास्माकं अर्थोऽस्पृश्यो भवति तथा । तेषां नियुक्तवसतिस्थानानां कुलीस्थानमिति निर्देशः । ‘जोहानिसबर्ग’ प्रदेशे तादृगेकं स्थानमासीत् । किन्तु कुलीस्थानयुक्तेष्वन्यप्रदेशेषु भारतीयजनानां निवासाधिकार आसीत् । जोहानिसबर्गकुलिस्थाने भारतीय जना एकोनशतवर्षपर्यन्तं निवस्तुमनुज्ञां गृहीत्वा स्थिता । तत्स्थाने जनबहुलमासीत् । जनसंख्या वर्धते स्म । स्थानविस्तारस्तु यथापूर्वमेवकरीत्या स्थितः । ‘नगरपालिका मलमूत्रविसर्जनस्थानान्यावश्यिककरीत्या स्वच्छीकरोति स्म । आरोग्यसंविधानानि न किंचिदकरोत् । मार्गव्यवस्था दीपव्योजना च नास्त्येव । निवासिनां योगक्षेमं विचारयितुमुदासीनतायां तस्यारोग्यरक्षणं करोतीति को विश्वासः । न खल्वेते जानन्ति गृहारोग्यविधानं शरीरारोग्यरक्षणं च नगरपालिकासहाय्यं तत्परीक्षणं च विना । तत्र गता सर्वेऽपि भारतीया यदि ‘रॉबिन्सन् क्रूसो’ऽभविष्यत्तदा तेषां कथान्यैवाभविष्यत् । जगत्यस्मिन् ‘रॉबिन्सन् क्रूसो’-स्थापितमेवमपि स्वास्थ्यं न जानीमः । सामान्यतो जना द्रव्यार्जनार्थं बहिर्गच्छन्ति । परन्तु दक्षिणाफ्रिकादेशं गतेषु भारतीयेषु प्रायो भूयिष्ठा मूढा निर्धनाश्च कृषिका बभूवुः । आदरपूर्वकं रक्षणं सर्वमपि तेषामावश्यकमासीत् । बहुसंख्या व्यापारिण

सुशिक्षिताश्च भारतीयास्तानतुसृता आसन् । पौरसभाया 'विभिन्न' जनगणकृता कृतसम-तीनां भारतीयजनानां मूर्तिना च स्थानमारोग्यशून्यं कर्तुं व्यवस्यताम । पौरसभासुरतर्गनिवासादविवितु-मुक्त्वा महतमनारोग्यमेव कारणीकृत्य स्थानं विनाशयितुं प्रयेते । तदुद्देशेनैव निवासिनः स्थानशून्यान् कर्तुं अधिकारिभ्योऽनुज्ञा प्राप्त । एषा कितासीतिनिर्णयेन जोहनिसबर्गस्थाने कृतनिवासोऽभवम् ॥

स्वस्वभूमिष्वधिकारयुक्ता निवासिनो नष्टप्रतीकाराद्द्रव्यमाप्तुमधिकारिणो बभूवु । भूग्रहणविषयान् परीक्षणीयान्परीक्षितु विशिष्टन्यायस्थानमेकं स्थापितमासीत् । यदि गृही पौरसभया प्रदेय नागीकर्तुमैच्छत्तदा न्यायस्थान गच्छेत् । अथ न्यायस्थानस्य निर्णये पौरसभा देयाधिक दत्त चेत् पौरसभा तावद् व्ययद्रव्य सहेत ॥

अथ सर्वे गृहिणो मामेव स्वेषा 'वकीलं' चक्रु । एतान्परीक्षणीयान्विषयान्गृहीत्वा द्रव्यमर्जयितु न मेऽभिलाषासीत् । न्यायस्थान यावत्प्रदेयद्रव्यमाज्ञापयत्तावता मनुष्ये यदमी निर्जयिन स्यु । कृषिगृहीतासु भूमिषु प्रतिमुद्राशीतिमित धन मे देय स्यात् । पक्षित यथा कथाचिद्भवतु नाम । अह तान् पुनरवोच युष्माभिर्दत्तद्रव्येष्वर्धभाग निष्किंचनानामुपयोगाय वैद्यशाला वेतरसंस्था वा प्रतिष्ठापयितु प्रयुञ्महे इति । एतत्तान् सर्वानानन्दयत् ॥

सप्तति परीक्षणीयविषया । तेष्वेकस्मैव निष्फलमासीत् । अतो मे प्रतिग्रहाद्द्रव्यस्य महती संख्या प्राप्ता । किन्तु तत्रासीद् 'इंडियन ओपीनियन' पत्रिका तदर्थं ममोपरि रूप्यकाणा षोडशसहस्राणि व्यय समवर्तते स्म । एतावत्परीक्षणीयविषयार्थे मया महान् क्लेशोऽनुभूत । व्यवहारिण सर्वदा मत्समन्तात् स्थिता । प्रायेण सर्वेऽपि ते समतिबद्धा कर्मकरा विहारतपरि-सरप्रदेशाद्दक्षिणभारतप्रदेशाच्चागता । तेषा विलक्षणक्लेशपरिहाराय स्वीय संघ एक कल्पित । स च वणिजा क्रयविक्रयिणा च स्वतन्त्रसंघादन्य । तेषा कतिचित् सहृदया उदारपुरुषा उच्चचरित्रसम्पन्नाश्च । तेषा नायका संघाध्यक्षो 'जयरामसिंग्' इत्येक सभाध्यक्षसमानो बद्रिमहाशय । इदानीमुभयेऽपि मृता । तौ ममातीव साह्यकारिणावास्ताम् । बद्रीमहाशयो मम समीपसंपर्क गत सत्याग्रहे प्रधानभागमुवाह । एषामितरेषा च सुहृदा संपर्केणोत्तरदक्षिण-भारतादागतैर्नि सर्वैर्भारतीयनिवासिभि समीपसंपर्क गतोऽहम् । न केवल 'वकील' परन्तु भ्रातेव स्थितस्तेषा स्वकीयसार्वजनिककार्येषु दुःखसंकटेषु च भागी अभवम् ॥

भारतीयजन कथ मामाह्वयन्निति ज्ञातु समीचीनमस्ति । अब्दुल्लाशेठमहाशयो मा गान्धिरित्याह्वातु निराकरोत् । अदृष्टवशात्कोऽपि मा 'साहेब'इत्यभिधानेनाप्यनिन्दन् । अब्दुल्लाशेठमहाशयो रमणीयनामधेय 'भाई' इति भ्रातरिति वा जगाद । यावद्दक्षिणाफ्रिका-देशमत्यज तावत्तन्नाम्नैतरेऽप्याह्वयाचक्रु ॥

१ भारतीयजनै समतिबद्धकर्मकरपत्युने नामधेये कश्चिन्मधुरो रस इवास्तीत्यभात् ॥

## पंचदशोऽध्यायः

# असितप्लेगोपद्रवः ( १ )

पौरसभायाः स्वीयनाप्तेरचिरादेव भारतीयजन स्थानान्नापनीत । गृहेभ्यो बहिष्करणात्पूर्वं तत्रत्योग्यवसतीं प्राप्तुमावश्यकमासीत् । किन्तु पौरसभाया सौलभ्येनेद कर्तुमशक्य-मासीत् । अत एव भारतीयजना पूर्वस्मिन्नशुचिस्थान एव वर्तितुमनुज्ञाता । तस्य परिस्थि च तदवस्था पूर्वापेक्षया हीनतराभूत् । स्वामित्वाद्विरम्येदानीमधिवासिनोऽभूवन् । अत परिवेष्टक-प्रदेशा अनारोग्यतया बभूवु । तादृगनारोग्यस्थितिर्दृष्टपूर्वा । यदा ते स्वामिन स्थितास्तदा शासकभयादपि यत्किंचिच्छुचित्वरक्षण कर्तुं व्यवसिता आसन् । पौरसभायास्तादृश भय नासीत । गृहस्थायिना मस्या वृद्धिमागात् । एतेनाशुचित्व क्रमश्च ववृधे ॥

यदा भारतीयजना एतादृक् स्थानानुभवेन व्यथिता आसन् तदाकस्मादसितप्लेगोपद्रव समभून । तमेन 'न्यूमोनिक' प्लेगेत्यपि वदन्ति । इद 'बूबोनिक' अपेक्षया भयकर मृति-कारक च ॥

एतद्रोगोत्पत्ते कारण जोहानिसबर्गपरिसरे सुवर्णखनिरेका ॥ अस्मिन्नाकरे कर्म कुर्वन्तो जना प्राय सर्वे निग्रोपदवाच्या । एषा शुचित्वरक्षणाय गाराणा नियोगिन सर्वथा प्रयुत्तर-दायिन आसन् । कतिचिद् भारतीयजना अपि खनिनिकटे कर्म कुर्वन्ति स्म । तेषा त्रयोविंशतिरे-तद्रोगेनाकस्मात् परिग्रस्ता सायकाले स्वावसतीराजग्मु । तत्काले मदनजितमहाशय 'इंडियन ओपिनियन' पत्रिकार्थे ग्राहकाननन्वेषयति स्म । कृतकार्य स्थानेऽस्मिन् क्षण स्थित । स किल निर्भय प्रसिद्धपुरुष । तस्य हृदयमेनान् रोगग्रस्तान् वीक्ष्य ररुदति स्म मत्सकाश लिखिताक्षर लेखमेक प्रापयत् । यथाकस्मादसितप्लेगोपद्रव प्राप्त । एतत्क्षणमेवागम्य शीघ्र यथायुक्त सविधान कर्तव्यम् । नो चेद्वय भयकरान्परिणामान् द्रष्टुमर्हाम । एतत्क्षणमेवागन्त-व्यमिति ॥

धीरो मदनजितमहाशय शून्यगृहस्यैकस्य बन्धन भित्वा रोगिण सर्वान् तत्र स्थापयामास । अह स्थान प्रति पादेनोपयानेन गत्वा पत्तनलेखकस्य न्यवेदय गृह स्वाधीनीकृतमन्वदर्भान् ॥

डॉ विल्यम–गॉडफ्रेमहाशय समाचारमाकर्ण्यैनमात्र एव स्वकार्यालयादागत्य वैद्यस्य कर्म धात्रीकर्म चोभय निर्वहति स्म । किन्तु त्रयोविंशतिरोगिणा परीक्षणाय वय त्रयो नालमभूम ॥

अस्तीय मे श्रद्धा स्वानुभवमाश्रिता यदेकस्य हृदय स्वच्छ स्याद्यदि नभवतुपद्रव सर्वेव तत्प्रतिशोधनाय पुरुषानुपायाश्चानयति । मम कार्यालये तदा चत्वार भारतीयजना आसन् । ते च

'कल्याणदास माणिकलाल गुणवन्तरायदेसाइ' अपि च चतुर्थोऽन्यो यस्य नामधेय नेदानीं स्मरामि। कल्याणदासमहाशय स्वपित्रा मद्वशे स्थापित । कल्याणदासमहाशयापेक्षयाधिकमुप कारिण मन पूर्णतया परमविधेय च प्रायो नैव दृष्टवान्। अद्यत्वशात्तदानीमयमनूढ आसीत्। महाल्पवयस्युक्तानि तस्य दत्त्वा कारयितु नैव विकल्प प्राप्तवानहम्। जोहानिसबर्गपत्तने माणेक लालमहाशयो मे प्राप्त । यथाह स्मर्तुं शक्तस्तथा सोऽप्यनूढ एवासीत्। अतोऽह चत्वारोऽपि लेखका सहकारिण पुत्रा वा भवन्तु तानाहूतीर्न्नु निर्णेयम्। अन्ये तु सज्ञा वयमाहूतास्तिमम इति। यत्र भवास्तत्र वय चैषेयामप मधुर च प्रत्युत्तरमासीत्॥

रीचमहाशयस्य कुटुम्बो महान्। स च लघिनु सन्नस्थित । किन्त्वह त प्रत्यरोधयम्। अपाये पातयितु त मम हृदय न धीरमासीत्। असावपायवल्याद्बहिरेव कार्यं करोति स्म॥

सा भयकरी रात्रि । जागरपरिपोषणाभ्या रोगिणो मयोपचरिता । किन्त्वसितरोगो पद्रवग्रस्तो न कोऽपि। डॉ गॉडफ्रेमहाशयस्य धैर्यं सान्त्वामिश्रमिवासीत्। परिपोषणकृत्य न बहल्मावश्यकमासीत्। पानायौषधमात्रापेक्षितस्य विधान रोगिण शयनीय च स्वच्छशुचीनि कृत्वा स्थापन रोगिण आनन्दनमेतावदेव कर्तुमावश्यक बभूव॥

तरुणानामतिमहती श्रद्धा निर्भयता च दृष्ट्वा ममातिमात्रमानन्दोऽभूत्। मदनजितसदृश स्यानुभवशालिन पुरुषस्य धैर्यं जानीम । किन्तु निर्वासिता तरुणानामेषा स्वभाव कथम्॥

यावदह स्मरामि तावच्छात्रौ सर्वे रोगिण उपचरिता ॥

परन्तु सर्वोऽय विषय करुणारसजनको मम धर्मसारो वर्तते च। तस्मादाय अध्यायद्वय तदर्थं उदाहरिष्याम ॥

षोडशोऽध्याय

## आसितप्लेगोपद्रवः (२)

शून्यगृह रोगिणश्च मद्वशे गृहीतवानिति कृतज्ञता आदर्शयन्नगरलेखक । स च सदस्यद्वी चकार यदिदानीमेतस्मात्कस्मिश्चनभवान् प्रतीकेद्दु नगरसभाया साधन नासीत्। परन्तु यावदस्य मनसापि माहाय्य दीयन गनि वाच ददौ। कर्तव्य प्रयेनदा जागरिता नगरपालिका कार्यानुष्ठाने विलम्ब न चकार॥

परेद्यवि शून्यशालेन्या मद्वशे कृत्वा तत्र रोगिणोऽपनीयन्तामिति सूचयामासु । परन्तु दैवतान्यस्थानानि शोधयितु नाङ्गीचकार। गृहमशुद्धमस्पृष्ट स्थितम्। कथंचित तदशोधयम।

धार्मिकभारतीयकार्यसंस्थात् कतिचिद्धनान्यपि चान्यान्यावश्यकानि तथाच तात्कालिकसेवा-वयमायाममकल्पयाम । पौरस्त्या लेडी सेविका प्रेषयत । द्वौ गौटलेमहाशयस्याधीनतया वैद्यशाला स्थिता ॥

सेविका दयालुः स्त्री । रोगिणः परमस्नेहेन सानन्दा सततं ददाति । परन्तु तान्स्प्रष्टुमपि नानुजाना । मा तावत् स्वयं रोगेण कृतनकमाभूदिति ॥

रोगिणां पदे पदे सर्वोपकारा प्रदातुमस्मानस्मनुज्ञासीत । सेविका जागरयास्तानपि ग्रहीतुमस्मरीत । स्वयं सा तथा करोति स्म । अस्मासु न कोऽपि तत् स्पृशति स्म । रोगिणा-मप्युपयोगोऽनेन भविष्यतीति मे श्रद्धा नासीत् । गोटलेमहाशयस्यानुज्ञामादाय मयैतानिच्छत्रीन् रोगिणो मृत्तिकाचिकित्सामग्राहयम् । आर्द्रमृत्तिकावसनानि तेषां हृदयेषु शिरस्सु च निक्षिप्तानि । एवं द्वौ रक्षितौ । अन्ये निराशितिर्पतनमष्टाशाञावामेव मृता बभूवुः ॥

एतदन्तरे पौरसभान्यानि कार्याणि करोति स्म । जोहनिसबर्गनगरात् त्रिक्रोशदूरे साक्रमिकरोगचिकित्सार्थं चर्मरोगशालैका स्थिता । सजीवौ द्वौ रोगिणौ चर्मरोगशालायाः समीपे पटमण्डपेषु स्थापितौ । तत्र नूतनरोगिणः प्रेषयितुं नाशितानि विघनागान्यान्तर् । वयमित्येतस्मात्कार्यान्मुक्ता अभूम ॥

केषुचिद्दिवसेषु गतेषु साध्वी सेविका रोगग्रस्ता मृता च । कस्मात् तौ द्वौ रोगिणौ रक्षितौ कथं विमुक्ता इति वक्तुमशक्यम् । परन्त्वयमनुभवो मृत्तिकाचिकित्सायां मे श्रद्धामवर्धयत् । मयमौषधरूपेण वास्तु । तदुपयुक्ततायां संशयो मे स्थितः । इयं श्रद्धा सत्य संशयो वा पर्याप्तकारणाश्रयौ न स्त इत्यहं जानामि । किन्तु तदानीन्तनता भावनाद्यापि रक्षितेयत तद्वक्तुमात्मस्यसंनियमस्मि ॥

आगते प्रेगोपक्रमे मुद्रायन्त्रं प्रमाणय तस्यैक कल्नेटेस्वनमकार्षम् । यथाग्रजन पौरसभाया वशामागनम् । ततः परं सानन्दमासाभूत् । तस्यैनायकनरान् उपकरणभरस्य कार्यीभूतोऽयं प्रयुक्तरान्दीति । अथ शेरु हेनरीसोलाकमहाशयं समपादयत् । तन्मुखेन माननीयगोखेलोटेन-महाशयस्य मैत्री प्राप्ता ॥

उक्तं मया पूर्वेतराध्याये यच्छाकाहाराणि भोजनालये सदा भुङ्क्ते स्मेति । अत्र लि आल्बर्ट—वेस्टमहाशयेनाहं समगच्छम् । अस्मिन्भोजनालये प्रतिसायमागच्छते स्म । भोजनान-न्तरं बहिः सह चरन्तौ स्व । वेस्टमहाशयः कस्मिंश्चिद्याथा मुद्रणशालायां भागीदारः । स च मुद्राविन्दु चक्रे । प्रेगोपक्रमसमये मम टेबल दृष्ट्वा भोजनालये समनरगोत्य द विनोऽभवत् ॥

उपक्रमादनन्तरं महत्कारिण्योऽह च भोजनालयमलीहलनन्त । स्वनागनभर्म स्वभोजन नियतेन क्रियते स्म । अत दर्शनेषु दिवसेषु सायंभोजन परित्यक्तम् ॥

अस्माहारं चैतद्भोजनापालस्यावनापूर्वमेव स्थापयत । भोजनालयस्य स्वामी मे सम्बर

परिचित । प्लेगरोगिणां चिकित्सायां निरतोऽहं मित्राणां सम्पर्कं यावच्छक्यं दूरीकर्तुमिच्छामीति मयासौ निवेदितपूर्वोऽभूत् ॥

भोजनालये दिनद्वयान्मामदृष्ट्वा वेस्टमहाशय प्रातःकाल एकदा नहि परिक्रमाय गन्तु सज्जस्थिते मयि कपाट कुट्टितवान् । द्वारमुदघाटयम् । भोजनालये भवन्त नाद्राक्षम् । अतोऽहं वस्तुतो भीतो भवत किंचिदप्यापतित स्यादिति । अत समागत्य भवान् प्रात गृहे स्यास्यतीति श्रद्धयागतोऽस्मि । बाढम् । अत्राहं स्थित । भवादृशे रोगिण प्रतिपालयितु साहाय्यदाने सज्जस्थितोऽस्मि । मदायत्त कोऽपि नास्तीति भवान् जानाति ॥

कृतज्ञोऽस्मीत्युक्त्वा निमेषार्धमप्यालोचयितुमगृहीत्वा मया प्रयुक्त यथा—धात्रीकृत्यस्य त्वामह न गृह्णीयाम् । एकद्विदिनेषु वयमितो विमुक्ता भविष्यामो नाधिका रोगग्रस्ता सम्भवन्ति चेत् । किंत्वेकोऽस्ति विषय ॥

को न्वयम् ? डरबनपत्तने 'इंडियन ओपिनियन' मुद्रायन्त्र भवादृशो स्थापयितु किं मन्यसे । मदनजि महाशयस्यात्रैव कार्यं विद्यते । डरबनपत्तनेऽक आवश्यक । यदि गच्छेद्भवास्तदर्थमहं विमुक्तो भविष्यामि ॥

मद्दृशे मुद्रायन्त्रमेकमस्तीति भवान् वेत्ति । प्रायो गन्तुमहं शक्नोमि । परतु प्रत्युत्तर सायं दास्यामि । सायंकालपरिक्रमे सभाषावहे ॥

परितुष्टोऽहमभूवम् । सभाषण वृत्तम् । गन्तु सम्मतिमदात् । वेतन तस्य न गणनीयमासीत् । वेतनार्जन तस्य नोद्देश आसीत् । प्रतिमास दशपौण्डवेतनम् । अपि च लाभे सति तदेको भाग इति व्यवस्थापितम् । परेऽहन्येव वेस्टमहाशय सायंकालीन 'मेल'शकट्या डरबनपत्तनाय प्रतस्थे । तस्याधमर्णीरितदेयं मया प्रत्युपलब्धव्यम् । यदाह दक्षिणाफ्रिकासमुद्रतीरमन्यज ताव त्पर्यन्तमय मम सुखदुःखेषु भागी स्थित ॥

वेस्टमहाशयो लाउथपत्तने कृषीवलकुटुम्बे जात । सामान्यविद्याभ्यास प्राप्त । परत्वह ममानुभवशालायामात्मसाहाय्यमात्मनुपलभ्य स्थित । जानामि त परिशुद्ध गभीरवृत्ति भगवद्भीरु परोपकारशील च ॥

तद्विषयेऽधिकतर च तस्य कुटुम्ब चागाम्यध्यायेषु ज्ञास्याम ॥

सप्तदशोऽध्यायः

# घस्मरं कूलीस्थानम्

यद्यपि मे सहकारिणोऽहं च रोगिणां रक्षणाद्विमुक्तास्तथाप्यसितप्लेगोपद्रवसम्बद्धा बहवो विषयाः स्थिताः। कूलीस्थानविषये पौरसभाया अनवधानता प्रत्युक्तपूर्वा मया। परन्तु सा गौरागनिवासिनामारोग्यविषयेऽतीवजागरूकासीत्। तेषामारोग्यरक्षणाय बहुधनं व्ययीकृत्येदानीं प्लेगविध्वंसनाय बलाभिषेकमिव धनाभिषेकं चकार। भारतीयजनस्योपरि पौरसभया कृतेषु बहुषु लोपदोषेषु प्रदर्शितेषु गौरागनिवासिनां कृते तदौन्मुख्यं दृश्यते। तस्याः प्रशासनीयप्रकल्पेषु यावच्छक्यमहं साहाय्यमकरवम्। मम सहकारिता त्यक्ता भविष्यच्चेत्तस्याः कार्यं साधयितुं कष्टतरमभविष्यत्। सा सेनाप्रयोगमप्यकरिष्यदित्यस्ति मे भावना॥

परन्तु सर्वमेतत्परिहृतम्। पौरसभाधिकारिणो भारतीयजनस्य चारित्र्येण सन्तुष्टाः। प्लेगविषयकस्य भविष्यत्कार्यस्यानुष्ठानं सुकरं जातम्। पौरसभाया आकाङ्क्षामनुसृत्य वर्तनीयमिति भारतीयजनेषु यावती मे शक्तिस्तावती प्रयुक्तवान् साधयितुम्। भारतीयजनः सर्वमपि कार्यं कर्तुमशक्तोऽपि ममाज्ञामुल्लङ्घ्य नैवावर्तत। इदमहं स्मरामि॥

कूलीस्थानं प्रबलरक्षामुखे स्थापितम्। अन्तर्बहिश्च गमनागमनाय यथा न शक्यमासीत्। मम सहकारिणा च निर्मुक्तानुज्ञापत्राण्यासन्। आसीन्निश्चयं निर्णयं स्थानस्य सर्वे निवासिनः स्थानं परित्यज्यान्यत्र गच्छेयुः। जोहानिसबर्गप्रदेशात् सप्तक्रोशदूरे समभूमिस्थले स्थूलपटमण्डपेषु त्रीन् सप्ताहान् वसेयुः। ततश्च स्थानमग्निदग्धं कुर्यात्। पटमण्डपेषु सभारानन्यदावश्यकद्रव्यं चानीय निक्षेप्तुं पर्याप्तः कालः आवश्यक आसीत्। एतदन्तरे कश्चिद्रक्षकश्चावश्यकस्तिष्ठेत्॥

निवासिनो भयत्रासयुक्ता आसन्। परन्तु मम सार्वदिकी स्थितिः किंचिद् समाधानमकरोत्। अकिंचना बहवो जना स्वरक्षितं स्वल्पमपि भूमेरन्तर्निक्षेपणेनदुःखाय द्रव्यमापतितम्। तेषां द्रव्यस्थापनकोशो नासीत्। ते न कंचिदजानन्। अहं तेषां (बैंकर) कोशस्थापितद्रव्यग्रहीताभवम्। द्रव्यप्रवाहा मम कार्यालये निपेतुः। तादृशकार्यनिर्वाहक्षणे मम प्रयासस्य शुल्कमादातुं न शक्यमासीत्। कथंचिन्मम कार्यं निरवाहयम्। कोशाध्यक्षो मे सम्यग्विदितः। एतानि धनानि भवत्पार्श्वे निक्षेप्तुं भवति प्रमगः। बहूनि ताम्र-रजतनाणकानि स्वीकर्तुं न चिंतामाकरिष्यन्। प्लेगोपद्रवस्थानेभ्य आगतानि धनानि स्प्रष्टुं तिरस्कुर्वन्तीति भयमासीत्। कोशाधिकारी मम सर्वरीत्या समाधानमकल्पयत्। कोशं प्रति धनप्रेषणात्पूर्वं रोगदोषपरिहारः कर्तव्य इति निश्चितम्। मम स्मृतौ षष्टिसहस्र 'पौंड'मितद्रव्यं कोशे न्यस्तमासीत्। येषां

यशो पर्याप्त धनमासीत्ताहमबोच न्यस्यतामिदं धनं प्रतिष्ठितन्यासरूपेणेति । ते तथा चक्रुः । यत्फलमेतदासीत्तेषा कतिपये चित्तसेवेषु चित्तविन्यासस्य सम्प्रदायं भेजिरे ॥

स्थाननिवासिनो विशिष्टशकटीद्वारा जोहानिसबर्गसमीपे 'क्लिपस्प्रुट'क्षेत्रं प्रति सचालिता । तत्र ते पौरसभया सार्वजनिकद्रव्यव्ययेन सभारान् दापिता । पटमण्डपीयमेतत्पत्तन सैनिकशिबिरमिवाद्दश्यत । अनभ्यस्तशिबिरजीवना क्लेशप्राप्ता परपाटिमल्लोक्याश्चर्यभरिता बभूवु । परन्तु निम्यमानुकूल्य तैर्न सोढम् । प्रत्यहं मया पादनोबचक्रयानेन गम्यते स्म । चतुर्विंशतिहोराभ्यन्तरे सक्लेशा ते व्यस्मरन् । आनन्देन च जीवितु प्रवृत्ता । यदा यदाह तत्रागम तदा तान् गीतेन हासेन चानुभवतोऽद्राक्षम् । सप्ताहत्रयपर्यन्तमनावृतप्रदेशे स्थिया स्पष्टमासीदारोग्यप्रकर्ष ॥

मम स्मृतौ निवासिनामागमनापरेऽह्न्येव स्थानमग्निदग्धमभूत् । पौरसभा दहनचाल्लाया किमपि रक्षितुमीषदपि लोभ नादर्शयत् । इममेव वेला तेनैव कारणेन क्रयविक्रयस्थाने स्थित दारु सर्वं ददाह । दशसाहस्र'पौंड'मितद्रव्य नष्टमन्वभूत् । पण्यस्थाने मृतमूषका यत्किंचिद् दृष्टा इत्येतदेव कारण शीघ्रकरणाय ॥

पौरसभा बहुव्ययमसहत । परं तत्प्रद्रवस्य वृद्धिमवारयत् । पत्तनं पुन सुखेन श्वासोच्छ्वा समकरोत् ॥

अष्टादशोऽध्यायः

# एकपुस्तकस्यैन्द्रजालप्रभावः

अमितप्रेगोपद्रवो निष्किंचनभारतीयजनेषु मम प्रभावमवर्धयत् । मम कार्यं पर्यनुयो पता च महदीचकार । 'युरोपियन'जनै कतिचिन्मपरीस्तथा समीपपरिचिता यथा मे नैतिक्या यर्तव्यताया प्राचुर्यं चक्रुः ॥

यथा वेस्टमहाशयस्य तथा पोलाकमहाशयस्यापि परिचय शाकाहारभोजनालयेऽकार्षम् । मायमेकदा स्वल्पदूरे निषण्णस्तरुणो मा द्रष्टुमिच्छामीति पत्रमेकं प्रैषयत । मम भोजनमञ्च-पार्श्वमेत्य यवोचम् । स तथाकरोत ॥

तेनोक्त यथा -- अहं 'क्रिटिक' पत्रिकाया उपप्रकाशक । मुद्रायन्त्रे प्लेगविषये भवतो लेखपत्रमपश्यम् । भवान् द्रष्टव्य इति मदभीच्छा जाता । इदानीं तमवसरं प्राप्त इति मनुष्यामीति ॥

पोलाकमहाशयस्योदारभावो मामाचकर्ष । तदैव रात्रावा परस्परं ज्ञातुं प्रवृत्तौ । जीवनस्य मुख्यविषयेषूभयोरपि समानोऽभिप्राय आसीत । अकृत्रिमं जीवनं तस्येष्टम् ।

तस्यासीदाश्चर्यकरी शक्तिर्बुद्धिमागतस्यानुभवमार्गमानेतुम् । स्वजीवने कृतानि कतिपयपरिवर्तनानि मूलतस्त्वरितवृत्तानि बभूवुः । 'ट्रिट्यन् ओपिनियन्' पत्रिका प्रत्यहमधिकव्ययवती भवति स्म । वेस्टमहाशयादागता प्रथमविज्ञापना भयकर्यासीत् । तेन हि लिखितं यथारम्भव्यापारतो यथा भवानालोचयत तथा लाभो न भावीति । नष्टमपि स्यादित्यहं भीतोऽस्मि । पुस्तकानि क्रमवर्तीनि न भवन्ति । प्रत्युपलम्भनीयो ऋणशेषो महान् विद्यते । तस्य शिरोलगृहं न जानीमः । इतस्ततो बहुशः समार्पणीयं भवति । परन्त्वेतत्सर्वं भवन्तं न त्रासयितुमलम् । यावच्छक्यं विषयान्सम्यक् स्थापयितुं प्रयतिष्ये । लाभोऽस्तु वा न वाहं पुनः स्थास्यामीति ॥

वेस्टमहाशयो लाभो न भवतीति प्रत्यक्षीकृत्य परित्यक्तवान् भवेत् । नाहं तस्य दोषं ब्रूयाम् । वस्तुतो व्यापारो लाभकारीति प्रमाणं विना मद्वचनं श्रुत्वा मामभिशप्तुमधिकारवान् भवेत् । परन्त्वयमेकमपि प्रवादशब्दं नोक्तवान् । अस्तीयं मे भावना यदेतद्विलोक्य वेस्टमहाशयो मां श्रद्धालुं मन्येत । मदनजितमहाशयस्य परिमल्यानं परीक्षणं विना समादाय लाभकारीति वेस्टमहाशयमवोचम् ॥

इदानीमहं सिद्धमतिरस्मि । यत्सार्वजनीनः सहकारी स्वयमनिश्चितो भाषणं न कुर्यादिति । सत्यव्रतो वस्तुतो महती जागरूकता भवेत् । प्रमाणतः सम्यक् शोधनं विना भाषणं सत्याभासः । इदं स्वीकर्तुमहं दुःखितोऽस्मि यदेतद् ज्ञात्वापि श्रद्धालुतास्वभावो न निजितो मयेति । शक्याद-धिकं कर्तुमाशैव कारणम् । इयमाशा बहुधा मम सहकारिणामेव क्लेशहेतुः । न तावन्मम ॥

वेस्टमहाशयस्य लेखं प्राप्य नातालदेशं प्रति प्रस्थितः । पोलाकमहाशयो मम केवलं विश्वासपात्रमासीत् । अग्निरथसञ्चालितयानारोदमग्निरथविरामस्थानं गतस्य प्रस्थानमालोक्य प्रयाणं कुर्वता भवता पुस्तकमिदं पठनीयमित्युक्त्वा इदं ते रोचत इति प्रयेमीयवदत् । तत्पुस्तकं रस्किनमहाशयरचितं 'अन्टु दिस लास्ट' इति ॥

एकदा पठितुमारब्धस्य विरम्य स्थापयितुमशक्यमासीत् । जोहनिसबर्गस्थानात् डरबनपर्यन्तं चतुर्विंशतिहोराकालमितं प्रयाणम् । बाष्पसञ्चालितयानं तत्र सायं प्रापत् । तस्यां रात्रौ नाहं निद्रां कर्तुमशक्नवम् । प्रस्तुतानुसारेण मम जीवनं परिवर्तयितुं निरचैषम् ॥

इदमेव प्रथमं पुस्तकं रस्किनमहाशयप्रणीतं मया पठितम् । मम विद्याभ्यासदिवसेषु नियमितपुस्तकानि विना न किंचिदन्यन्मया पठितम् । यदाहं कर्मोद्युक्तस्तदा स्वल्पकालवशात्र पठितुमशक्नवम् । पुस्तकोत्पन्नं ज्ञानं मे बहुलं नास्ति । स्वल्पनियमनेन न मे नष्टमासीत् । प्रत्युत परिमितपठनेन यत्पठितं तत्सम्पूर्णमेव जीर्णीकृतम् । पठितपुस्तकेषु तात्कालिकपरिवर्तनं सञ्जातमुत्पादितवत्पुस्तकमेकं 'अन्टु दिस लास्ट' इति । तस्य भाषान्तरीकरणं पश्चात्कृतं गुर्जरभाषाया सर्वोदयनाम्ना लेखने ॥

रस्किनमहाशयरचितेऽस्मिन्महाग्रन्थे ममागाधहृदयगतनिश्चयानवालोकयमिति विश्वसिमि। अत मामाचकर्ष जीवनं च परिवर्तयामास ॥

मानुषस्य हृदये गूढं यत्समीचीनं वर्तते तदाकृष्य प्रदर्शयितुं शक्ताः कवि । कवय सर्वानेकरीत्या न प्रवर्तयन्ति । यत प्रतिमनुष्य समानपरिमाणेन न प्रसारित ॥

'अन्टु धिस लास्ट' अस्य योऽर्थ इत्यमहं जानामि —

( १ ) प्रत्येकमानवस्य यत्साधु तत्सर्वेषां साधु वर्तते ।

( २ ) 'वकील' कार्यस्य मूल्यं नापितकार्यस्य मूल्यं च समान यत सर्वेऽपि स्वस्वकार्याज्जीवनं सपादयितुमधिकारिण ।

( ३ ) भूमे कर्षकस्य कर्मकारस्य च जीवनानि सुजीवनानि ।

एतेषां प्रथममहमज्ञासिषम् । द्वितीयं मे बुद्धौ मन्दं मन्दं स्थितम् । तृतीयं न मे कदाप्यस्फुरत् ॥

'अन्टु धिस लास्ट' दिनवत्प्रकाशीकृतवान् यथा द्वितीयं च तृतीयं च प्रथमगतानीति । प्रत्यूषेऽहमुत्थित एतानि कारणान्यनुभवमार्गमानेतुं सन्नस्थित ॥

## एकोनत्रिंशोऽध्यायः

# 'फीनिक्स' –आश्रमः

वेस्टमहाशयेन सह सर्वोऽपि विषय समापित । 'अन्टु धिस लास्ट' पुस्तक मम मानसेोपर्युत्पादित फलमप्यवर्णयम् । 'इंडियन ओपिनियन' कृषिक्षेत्रं प्रत्यानेतव्यं तद्विषये प्रत्येकेनापि परिश्रमितव्यं पूर्ण जीवनवेतनमेव ग्रहीतव्यमवकाशे प्राप्ते मुद्रायन्त्रकार्यमपि द्रष्टव्यम् । इत्येवं कर्तव्यसूचनामकरवम् । वेस्टमहाशय सम्मतिं ददौ । प्रतिमासस्य प्रत्येक वेतनं वर्णदेशाभिमानी निरपेक्ष्य 'पौंड' त्रयमिति निश्चितम् ॥

परन्तु प्रश्न एक स्थित । मुद्रायन्त्रे कार्यकारिणो दश वा तदधिका वा दूरक्षेत्रं गत्वा पेत्तऽभूमिभावेन किं सन्तुष्टा भविष्यन्तीति । एतदुपायस्वीकारे न योग्या ये भवन्ति ते पूर्ववर्तितने गृहीत्वा क्रमश क्रमश आश्रमस्यागीभवनाय प्रयतितव्यम् ॥

कर्तव्यसूचनामुद्दिश्य कर्मकारिभि सह भाषणं कृतवान् । मदनजितमहाशयायेदं नाग-घत । अवरुद्धयाचेना ममैव रसस्य मांसस्य विनियोगोऽपि विनष्टो भवेत् । कर्मकारिणः मोऽद्रि पलायेरन् । 'इंडियन ओपिनियन' व्यापारो विरमति । मुद्रायन्त्रं चानुपयोगात् स्थगितं भवेत ॥

मुद्रायन्त्रे कर्म कुर्वता मध्ये मम ज्ञातीनामेकतम छगनलाल-गान्धिमहाशय एक आसीत्। कर्तव्यसूचना वेस्टमहाशयस्य यदाकरव तदैवास्यापि कृतवान्। मार्यापत्यानि च तस्यासन्। परन्तु इंग्लण्डप्रभृति भयैव शिक्षितो मद्गृहे स्थित। मयि तस्य श्रद्धा सम्पूर्णासीत्। अतो विवाद विनोक्तोपायस्य सम्मति दत्वाथापि मत्समीपमेवास्ते। यन्त्रकार गोविंदस्वामीमहाशयोऽपि सम्सूचनामङ्गीचकार। इतरे तु नैवोपाय स्वीचक्रु। परन्तु मुद्रायन्त्र यत्र गच्छेत्तत्र गन्तु समेनिरे॥

इमान् विषयानेतैर्मनुष्यैर्व्यवस्थापयितु दिनद्वयादधिक काल नापर्याप्तम्। अतोऽहं निरन्तर विना डरबनपत्तने वाष्पमचालितयाननिरामस्थानसमीपस्थितभूमिरेवापेक्षितेति समाचारपत्रेणाप्रकाशयम्। प्रतिगृहनामिनि फीनिक्सस्योपहार आगत। भूमिं परीक्षितुमहं वेस्टमहाशयश्च गतौ। सप्ताहाभ्यन्तरे विंशति'एकर'परिमिता भूमिरस्माभि क्रीता। तत्र समीचीन स्वल्पो निर्झर कतिपये नारङ्गचूतवृक्षाश्चासन्। तत्समीप एवाशीति 'एकर'परिमिता भूमिरासीत्। तत्र च बहव फलवृक्षा जीर्णकुटीरश्चैक आसन्। इद च क्रीतमस्माभि। समग्रव्यय एकसहस्रपौण्डमितद्रव्यम्॥

दिवगतो रुस्तमजीमहाशय एतादृशोद्यमेषु मम हस्तावलम्ब यच्छति स्म। उपायोऽय तस्येष्ट आसीत्। महाभारगृहस्य प्रयुक्तपूर्वलोहफलकान् गृहनिर्माणवस्तूनि चास्मद्गृहे निचिक्षेप। अस्माभिश्च कार्यमारब्धम्। कतिपयभारतीयतक्षका प्रस्तरन्यासकृतश्च 'बोअर' युद्धे मया सह कार्यकर्तारो मुद्रायन्त्राय मठपिका निर्मातु साहाय्यमकुर्वन्। एतद्भवन परिमाणे पञ्चसप्तति 'फीट' दीर्घं पञ्चाश 'फीट' विस्तीर्णमेकमासाभ्यन्तरेव सज्जस्थितमभूत्। वेस्टमहाशय इतरैजनाश्च तक्षकै शिल्पशिल्पिभिश्चामायेऽपि निर्भीका स्थिता। निवास शून्यस्तृणैरतिप्ररूढ सर्पैरावान्तो निरस्तु भयकर आसीत्। प्रथमत सर्वेऽपि पटमठेषु उषिता प्राय सर्वाणि वस्तूनि शकटेषु 'फिनिक्स' प्रदेश प्रति नीतानि। डरबनपत्तनात् त्रयोदशक्रोशदूरे 'फीनिक्स' स्थान वाष्पमचालितयाननिरामस्थानात् सार्धद्विक्रोशदूरे स्थितम्॥

'मरक्युरि' मुद्रायन्त्रे 'इंडियन ओपिनियन' पत्रिकैकवारमेव बहिर्मुद्रापिताभूत्॥

अहमिदानीं 'फीनिक्स' पत्तन प्रति भारतदेशात्मया सह स्वाद्दष्टपरीक्षार्थमागतान् तत्तत्कार्येषु प्रसक्तानाकष्टु प्रायतिषि। धनान्वेषणाय ते आगता। तस्मात्तानुनेतु कष्टमासीत्। परतु कतिपये समेनिरे एतेषु मगनलालगान्धिमहाशयस्य नामधेयमेक स्मरामि। अन्ये कार्याय प्रतिनिवृत्ता मगनलालगान्धिमहाशय स्वकार्यमेकान्तत परित्यज्य मया सह स्थित शक्त्यामानिग्रहे श्रद्धाया च मम नैतिकपरीक्षासु मम पूर्वोक्तसहकारिण मध्ये प्रथमस्तिष्ठति। स्वयंशिक्षित-शिल्पिनिवस्य तस्य तन्मध्ये स्थितिर्विलक्षणा भवति॥

एव 'फीनिक्स'व्यवस्थापन चतुस्त्रिंशोत्तरनवसहस्रशतमिततमे समवर्तिनम्। तथापि 'इंडियन ओपिनियन' पत्रिका बहुक्लेशान्ते पतिनापि मुद्रण प्राप्स्यति॥

परेत्याभिकरमेशा वृत्तानि परिवर्तनान्याद्या नेराज्य चान्यनन्यायमपेक्षन्ते॥

# प्रथमा रात्रिः

'**इंडियन-ओपिनियन**' प्रथमसंख्या 'फीनिक्स'आश्रमाद्विनिर्गमयितुं नासीत्सुलभो विषय । द्विप्रकारेण पूर्वाजयान नाकरिष्य यदि प्रथमा संचिका त्यक्ता वा नियमिता वाभविष्यत्। यन्त्रेण मुद्रायन्त्रप्रसारण मम बुद्धिं नारूढम्। यत्र कृषिकार्यं हस्तेन क्रियते तत्र हस्तशक्तिरेव योग्येति मे मनस्यासीत्। परन्तु मनोगत न शक्यमित्यस्माभिस्तैलयन्त्र प्रतिष्ठापितम्। यन्त्रहानौ यथा कयाचित् लघुक्रियया यन्त्रहाने परिहार स्यात्तथा भवितव्यमिति वेस्टमहाशयस्य सूचना दत्तवान्। अतोऽसौ हस्तेन भ्रमणयोग्य चक्रमेक व्यवापयत् । विदूरस्थ' फीनिक्स 'सदृशस्थलस्य पत्रस्य परिमाण दैनदिनपत्रिकावत्र योग्य मतमासीत्। 'फुलस्केप' परिमाणाय तथा नयनीकृतमासीद्यथा पादनोदयन्त्रेण प्रतिलिपयो निर्मिता स्यु ॥

आदौ मुद्रापणदिवसात्पूर्वं कालातीत सर्वे वय कार्यप्रसक्ता अभूम। प्रत्येको युवा वृद्धो वा पत्रिकापुटीकरणेन साहाय्य कुर्यात्। दशहोरार्धरात्र्योर्मध्ये प्रायशोऽस्मत्कार्यं समाप्तिमगमत्। परन्तु प्रथमावृत्ति सस्मरणीया भवति । फलकास्तालयन्त्रबद्धा स्थिता । परन्तु यन्त्र न चचाल। यन्त्रशिल्पिनमेक डरबनपत्तनाद्व्यमानीय यन्त्रचालनाय स्थापितवन्त । सोऽप वेस्टमहाशयश्च बहुक्लेशेन वृथा प्रायतिषाताम्। प्रत्येक पुरुषोऽपि बहु शुक आसीत्। वेस्टमहाशयो निराशो भूत्वा नेत्राम्बुपूर्ण समागत्योवाच यथा — यन्त्र न चलति। समये पत्रिका सचालयितुमशक्यमिति ॥

यद्येवदेव कि कुर्म । अल नेत्रजल मुञ्च। पुरुषप्रयत्नसाध्य यत्किंचिदन्यदेव कुर्म । हस्तचक्र किल स्यात्। इति समाधानेनावोचम्॥

तेन प्रयुक्त यथा कार्यकरणायास्मद्वशे जना कुत्र सन्ति। कार्यं कर्तुं वय न पर्याप्ता । प्रत्येक चत्वार आवश्यका । अस्मज्जना सर्वेऽप्यायस्ता भवन्तीति ॥

गृहनिर्माणकार्यमद्यापि न समाप्तम्। अत एव तक्षका अस्मद्वशे तिष्ठन्ति। मुद्रायन्त्रभूमितले निद्राणा स्थिता। इमानेवोपयोक्तु किं न शक्यम्। सर्वां रात्रिं कार्यं कुर्म । अयमुपायोऽस्माक सन्निस्थितो भवति ॥

तक्षकानुत्थापयितुं गतोऽस्मि। अस्मज्जनो नूनमतीवायस्त । उक्त मया यथा — अय व्यवहारो ममाह्लादनमिति ॥

वेस्टमहाशय प्रत्युवाच। तर्हि कार्यानुष्ठान शक्यमेव ॥

'फीनिक्स' गृहीतोऽनिरीक्षितपर्यायोऽनिरीक्षितमभवाश्च नैव हानिकरा अभूवन्। परन्तु पूर्वनिरीक्षितादुत्तममिति वक्तमशक्यम् ॥

हस्तप्रयासेन प्रत्येकजीविना लब्धु मुद्रायन्त्रपरिसरवर्तिनीं भूमिं खण्डशो विभज्य दत्ते प्रत्येक 'एकर' त्रयमागतम्। तेष्वेको मम भाग । एषा स्थलानामुपर्यनपेक्षायामपि ओहमयाना गृहाणा निर्माणमकार्यम् । आसीदस्मदभिलाषो यत्तृणच्छन्नानि मृत्तिकाकुटीराण्यथवा सामान्यकृषीवलोचितानीष्टकामदिराणि निर्मातुम्। परन्तु न शक्यमासीत् । तेषा व्ययोऽधिको भविष्यति । कालेऽप्यधिकोऽपेक्ष्यते स्म । प्रत्येकोऽपि यावच्छक्य शीघ्रमेवात्रस्थातुमुत्सुकोऽभूत् ॥

पत्रप्रकाशकोऽद्यापि मनसुखलालनाजरमहाशय एवासीत् । नवीनोपायस्तेन नाङ्गीकृत । पत्रिका डरबनपत्तनात् सचाल्यति स्म । तत्र 'इंडियन ओपिनियन' पत्रिकाया शाखाकार्यालय आसीत् । यद्यपि दक्तेतना मुद्राक्षरविन्यासकृत स्थितास्तथाप्याश्रमस्य प्रत्येक पुरुषो मुद्राक्षरस्थापन मुद्रायन्त्रचालनक्रमेषु प्रयास कमपि सुलभतर शिक्षितुमुद्युक्त आसीत्। अज्ञातपूर्वकर्माण शिक्षते स्म । अह तावदत्रकर्मणि मूर्ख एव स्थित । मगनलालगान्धिमहाशयो न सर्वानत्यति शयितवा मुद्रायन्त्रकार्यालये यद्यपि नैव कार्यमकरोत्तथाप्यतिनिपुणो मुद्राक्षरविन्यासकारी बभूव । न केवल शीघ्रता प्रापदपि तु मुद्रायन्त्रस्य सर्वास्वपि शाखासु शिक्षणीयमशिक्षतेति ममातीवाश्चर्यम्। स निजगमीयशक्ति प्रति नैव सचेतन आसीदिति मे सार्यदिको वितर्क ॥

वय पुनरिदानीमवस्थिता गृहाणि च सज्जस्थितानि तावदेव नूतननिर्मितानि । इमानि परित्यज्य जोहानिसबर्गप्रदेश गन्तव्यमापतितम्। तत्र कार्यमवधान विना चिरकालपर्यन्त त्यक्त्वा स्थातव्यपरिस्थिति न प्राप्त ॥

जोहनिसबर्गप्रदेश प्रतिनिवृत्तो मया कृतानि मुख्यपरिवर्तनानि पोलकमहाशयमसोचम्। पुस्तकदान तावत् फलकार्यासीदिति परानन्दमभजत्। सोऽप्यैच्छद्यथा नूतनकार्ये भाग बोद्धु किं मे शक्य स्यादिति। व्यवस्थापन समीक्ष्यसि वेच्छसमेवेत्यहमवोचम्। तेन प्रयुक्त यथा—अह सज्जस्थित प्रवेशनीयश्चेदिति ॥

तस्य निश्चयबुद्धिर्मां वशीचकार। मुख्याध्यक्षस्य पूर्वसूचना दत्वा 'क्रिटिक' पत्रिकाया रामुत्तारित नर्मेण 'फीनिक्स'स्थल प्राप । स्वस्य सौकिकयुक्तिभि सर्वेषा हृदय निर्जित्य शीघ्रमेव कुटुम्बजनो बभूव । स्वस्वभावस्तया सरलो यथा 'फीनिक्स'स्थले जीवन विचित्र यत्नतर वा न मेने । हसाय जलमिव तस्मै तदरोचत । परन्त्वेन तत्र चिराय स्थापयितुमशक्य मासीत् । रीचमहाशय 'इङ्लेण्ड' देशे 'लौ' अभ्यास समापयितु निरचैषीत् । अत्र मयैकेन कार्यातिभार सोढुमशक्यमासीत् । पोलाकमहाशयस्याहममूचय यद्वचा कार्यालये समायुक्त प्रतिपुरुषस्य योग्यो भवितुमर्हसीति । पर्यन्ते उभावपि कार्यान्निवृत्य 'फीनिक्स' स्थलेऽवस्थितौ भवनेत्यावाभ्यामाशोचितम्। तत्तु तथा न सवृत्तम् । पोलाकमहाशयस्तया श्रद्धालुस्वभाव यथा

